श्री गणपतिर्जयति

# योगजागमम्

कैलासशिखरे रम्ये चामीकरनिकेतने
योगासनस्य चोर्ध्वस्थं वामेगौरि समायुतम् १
सदाशिव स्वरूपं यत्तं प्रभुञ्च श्रवणे विदुः
देव देव महादेव लोकनाथ जगद्गुरो २
अक्षरोत्पत्ति किन्नाथ आगमोत्पत्ति किं शिव
वक्तुमर्हसि देवेश यद्यनुग्रहभागहम् ३
ईश्वरः
शुवतत्वे परे सूक्ष्मे बिन्दोरुत्पत्तिरुच्यते
बिन्दोर्नादस्समुत्पन्नो नादाच्छक्तिस्तु जायते ४
शक्तेस्तु वाक्भवं जातं वाक्भवात्षोडशाक्षरम्
कलाभिर्व्यञ्जनं जातम् व्यञ्जनात्सर्वशास्त्रकम् ५
कामिकं योगजं चिन्त्यं कारणन्त्वजितन्तथा
दीप्तं सूक्ष्मं सहस्रं च अंशुमान्सुप्रभेदकम् ६
विजयञ्चैव निश्वासं स्वायम्भुवमथानलम्
वीरं च रौरवञ्चैव मकुटं विमलन्तथा ७
चन्द्रज्ञानञ्च बिम्बं च प्रोद्गीतं ललितन्तथा
सिद्धं सन्तानशर्वोक्तं पारमेश्वरमेव च ८
किरणं वातुलन्त्वेतास्त्वष्टाविंशतिसंख्यकाः
कामिकं योगजं चिन्त्यं कारणत्वजितन्तथा ९
दीप्तं सूक्ष्मं सहस्रं च ईशानमुख ज्ञापकाः
तानि विद्येश्वरैर्नाम्ना कामिकादीनि चाष्टकम् १०
प्रथमं सप्त कोटिस्तु तत्सारं त्रिंशलक्षणम्
तत्सारं त्रिंशलक्षन्तु तत्सारं षट्सहस्रकम् ११

अग्नौ विघ्नेश्वरपर गिरीशो ब्रह्म एव च
अंशुमाद्यादि पञ्चैते सद्यवक्त्रे तु ज्ञापकाः १२
अनल ---- तिञ्चैव नन्दीशो महतश्शिवः
सर्वात्म देवताश्चैव अनलादिषु पञ्चसु १३
आग्नेयादिषु पञ्चैते अघोरमुखेषु ज्ञापकाः
वीरभद्रमनन्ता च बृहस्पतिः प्रशान्तकः १४
शूलिनो विमलादिस्तु नाममुखेषु ज्ञापकाः
शिवाष्टौ सोमदेवश्च श्रीदेवी गरुडस्तथा १५
महाकाळ सुपञ्चैते तत्पुरुषमुखे ज्ञापकाः
परार्धं प्रथमं प्रोक्तं द्वितीयं लक्षमेव च १६
तृतीयं शतसाहस्रं यथाक्रममिति स्मृतम्
चतुर्थं कोटिसंख्या च पञ्चमन्त्वयुतं स्मृतम् १७
षष्ठस्य नियुतं ज्ञेयं सप्तमं पद्मसंख्यकम्
अष्टमं शङ्खसंख्यञ्च नवमं पञ्चलक्षकम् १८
दशमं त्रिकोटि संख्या च एकादशन्तथैव च
द्वादशं कोटिसंख्या च सार्धकोटित्रयोदश १९
अयुतं चतुर्दशं प्रोक्तं नियुक्तं पञ्चदशं स्मृतम्
षोडशं चायुतञ्चाष्ट शतसाहस्रमाकुटम् २०
त्रिलक्षं विमलं प्रोक्तं चन्द्रज्ञानञ्च कोटिकम्
मुखबिंबं सहस्रं तु प्रोद्गीतन्तु त्रिलक्षकम् २१
ललितं चाष्ट साहस्रं सिद्धं स्यात्सार्धकोटिकम्
सन्तानं षट्सहस्रन्तु शर्वोक्तन्तु त्रिलक्षकम् २२
पारमेश्वर तन्त्रन्तु लक्षं द्वादशमेव च
किरणं पञ्चकोटिस्याद्वातुलं शतसाहस्रकम् २३
तन्त्राणां कामिकादीनां ग्रन्थ संख्याः प्रकीर्तिताः
नारसिंहं च वक्तारं भैरवोत्तरमेव च २४

कामिकस्य त्रिभेदाश्च ---- स उच्यते
योगजस्य सुधासक्ता तारको वीणाकाख्यकम् २५
शिवोक्तमात्मयोगञ्च योगजं पञ्चधा भवेत्
पापनाशं परोद्भूतं सुचिन्त्यममृतात्मकम् २६
सुभगं वामसंज्ञं च चिन्त्यभेदमिति स्मृतम्
यथाक्रमेण चेमानि चिन्त्यभेदास्तु षड्विधाः २७
माहेन्द्रं कारणं दौर्गं पावनं भीमसंहिता
विद्वेषं मारणञ्चैव सप्तधा कारणस्य तु २८
पार्वतीशं परोद्भूतं प्रभूतं पद्मसंहिता
अजितस्य चतुर्भेदं मयाप्रोक्तमतः परम् २९
असङ्ख्यमब्जमाच्छाद्यम् आनन्दममितद्युतिम्
अद्भुतं माधवोद्भूतम् अक्षयन्दीप्तके नव ३०
सूक्ष्मं च एकतन्त्रन्तु तत्सारं षट्सहस्रकम्
अजितं दीप्तकञ्चैव जातिभोगं प्रमेयकम् ३१
विबुधं प्रबुधञ्चैव हस्तशुद्धमलङ्कृतम्
बोधं सहस्र तन्त्रं च तन्त्रभेदाश्च ते दश ३२
काश्यपं वासवं नीललोहितं भूततन्त्रकम्
विद्यापुराणमैन्द्रञ्च आत्मालङ्कारमेव च ३३
वासिष्ठं गौतमं ब्राह्ममीशानोत्तरमेव च
करणञ्चांशुमाञ्चैव तस्य द्वादश भेदकम् ३४
अभेदं सुप्रभेदञ्च भवं सौम्यमथोद्भवम्
मृत्युनाशमघोरं च महाघोरमतः परम् ३५
वैरेश्वरञ्च विजयम् विजयस्याष्ट भेदकाः
निश्वासोत्तरतन्त्रञ्च ततो निश्वासमेव च ३६
निश्वासाख्यम्महातन्त्रं निश्वासाख्यं मुखोदयम्
निश्वासनयञ्चैव मन्त्रनिश्वासमेव च ३७

निश्वासकारिका चैव निश्वासघोरमेव च
निश्वासमष्टधा प्रोक्तम् प्रजापतिमतन्तथा ३८
पद्मं च द्विविधं विद्यात् स्वायंभुवं विशेषतः
आग्नेयं व्योमतन्त्रन्तु आग्नेयस्य द्विधामतम् ३९
नाम्नस्तु
प्रस्तरं फुल्लममलम् प्रबोधं बोधबोधकौ
शकटम्मोहसमयम् अमोहं शाकटाविकम् ४०
विलेखनं बिलं भद्रं वीरं वीरे त्रयोदश
कालाख्यं कालदहनम् रौरवं रौरवोत्तरम् ४१
महाकालमतश्चैन्द्रम् रौरवं षड्विधं स्मृतम्
मकुटोत्तरन्तु मकुटं मकुटस्य द्विधा स्मृतम् ४२
वृषगुह्यमथाक्रान्तम् वृषभं वृषभोदरम्
सुदन्तमतिभूतञ्च रौद्रभोगन्तथैव च ४३
आरेवतम् सुभद्रञ्च अतिक्रान्तमलङ्कृतम्
अच्युतञ्चाष्टहासञ्च आनन्दम्मारकन्तथा ४४
भेदं विमलतन्त्रस्य षोडशैव प्रकीर्तिताः
एकपादपुराणञ्च स्थाणवाख्यन्नन्दिकेश्वरम् ४५
शंकरं विजयं प्रोक्तं श्रीमुखं शिवरुद्रकम्
कल्पभेदमिति ख्यातम् शिवशासनमेव च ४६
देव्यामताख्य तन्त्रञ्च शिवशेखरमेव च
वारुणञ्चैव वायव्य चन्द्रज्ञानञ्चतुर्दश ४७
चतुर्वक्त्रञ्च संस्तोभम् प्रतिबिम्बन्तु योगजम्
अर्धालङ्कारमैशानं तटिनीरन्तु कोटिकम् ४८
कुट्टिमाख्यन्तुलायोगम् तुलाप्रत्ययमेव च
महाविलं महायौरं पट्टशेखरमेव च ४९
नैर्ऋतं स्मृतिसंख्या च मुखबिंबस्य भेदकम्

दण्डधारं पाशबन्धं पिङ्गळामतमेव च  ५०
वाराहं कवचं क्रौञ्चम् शिवज्ञानं धनुर्धरम्
कालज्ञानं च विज्ञानम् आयुर्वेदञ्च गीतकम्  ५१
भरतञ्च धनुर्वेदम् आतोद्यं सर्वदंष्ट्रकम्
प्रोद्गीताख्यस्य तन्त्रस्य भेदाष्षोडशधा स्मृताः  ५२
लळितोत्तरं च कौमारं लळिताख्यमतः परम्
लळितस्य त्रयो भेदा शामाख्यं शशिमण्डलम्  ५३
सारोत्तरं मोसनकम् सिद्धञ्चैव चतुर्विधम्
अमरेशं सुराध्यक्षम् लिङ्गाध्यक्षम्मधाख्यकम्  ५४
अनलं शाकरद्वन्द्वं सन्ताने सप्तभेदकाः
ईशानं शिवधर्मं च शिवधर्मोत्तरन्तथा  ५५
दिव्य प्रोक्तं कुबेराख्यं शर्वोक्तस्येह पञ्चधा
हंसं पद्मं च मातङ्गं सामान्यं यक्षकन्तथा  ५६
पुष्कलं सुप्रियायोगम् सप्तधा पारमेश्वरे
पद्माख्यं गारुडन्नीलं भानवी पञ्चरौक्षकम्  ५७
प्रबुद्धं धेनुकञ्चैव कालाख्यं किरणे नव
वातुलोत्तरमन्त्रं च कालज्ञानं पुरोहितम्  ५८
श्रेष्ठं सर्वात्मकं सर्वं शुद्धन्नित्यं महानलम्
विश्वं विश्वात्मकं तत्वं वातुळे द्वादश स्मृतम्  ५९
एषां भेदोपभेदञ्च समासात्परिकीर्तिताः
सदाशिवमुखाब्जेषु भेदोपभेदकाश्श्रुताः  ६०
अष्टादशभिस्सिद्धान्तं कथितं पारमेश्वरम्
ईशानस्य मुखोद्गीर्णं तन्त्रार्णवमिदं परम्  ६१
तत्पुरुषस्य मुखे जातं सिद्धवेदान्तमुच्यते
ऋक्शाखा शतविंशत्तु यजुश्शाखा शतं भवेत्  ६२
सामशाखा सहस्रं चाथर्वशाखा नवापि च

नवोपनिषदश्चैव सर्वोपनिषदः स्मृताः ६३
योगशास्त्राणि द्वात्रिंशद्बिरहेण श्रुतं स्मृतम्
पाशुपतं महातन्त्रं भेदाष्षोडश एव हि ६४
लाकुलं विमलं तन्त्रं केवलं वै विनर्णयम्
महापाशुपतन्तन्त्रम् केवलं शिवनिर्णयम् ६५
महापाशुपतन्तन्त्रम् शुद्धपाशुपतन्तथा
लक्षव्यूह समावेशं भारद्वारस्य निर्णयम् ६६
रुद्रोद्गीतं शिवधर्म विज्ञानं सुप्रबोधकम्
अशुद्धक्तं षोडशं तन्त्रं महापाशुपतं भवेत् ६७
चतुर्दशप्रमाणन्तु सोमसिद्धान्तमेव च
रुद्रांकुशं सुवर्णं च प्ररोहन्तु तथैव च ६८
हृदङ्कुशं प्रमाणं च हृदयनिर्णयन्तथा
पञ्चोद्गीतं पञ्चशतं शिवमात्ररुद्रमात्रकम् ६९
कपालं योगमुण्डं च सोमयागकरण्डकम्
गारुडं भूततन्त्रं च पञ्चार्थं च प्रपञ्चकम् ७०
अघोरस्य मुखे जातं दशकोटिप्रविस्तरम्
न्यायशास्त्रं चतुर्विंशच्चतुष्षष्टिर्लाकुळं भवेत् ७१
वामदेवमुखे जातम् प्रत्येकन्दशकोटिकम्
अष्टादश पुराणं च धर्मशास्त्रन्तथैव च ७२
मीमांसे न्यायशास्त्रं च षडङ्गानि तथैव च
वेदाश्चत्वार एवन्तु इतिहासं सहस्त्रकम् ७३
शिवधर्मोत्तरं शास्त्रं शिवधर्म पुराणकम्
--------------- पदाष्षोडश एव तु ७४
वैशेषिके च ते सर्वे पदार्थाष्षट् प्रकीर्तिताः
द्रव्यं गुणं च कर्मा च सामान्यं च विशेषकम् ७५
समवायं षडेते वै पदार्थास्संप्रकीर्तिताः

पाञ्चरात्रं महामार्गं पञ्चलक्षसमाहिताः ७६
सद्योजाताद्विनिष्क्रान्तं ब्रह्मरात्रादिपञ्चकम्
प्रथमं ब्रह्मरात्रं च द्वितीयं रुद्ररात्रकम् ७७
तृतीयमिन्द्ररात्रन्तु चतुर्थमृषिरात्रकम्
बार्हस्याभिधानन्तु पञ्चमं परिकीर्तितम् ७८
सामुद्रं भूतशास्त्रं च वैद्यशास्त्राणि चैव हि
सद्योजाताद्विनिष्क्रान्तं वैद्यशास्त्रन्त्रिलक्षणम् ७९
भूतशास्त्रं षट्सहस्त्रं सामुद्रमयुतत्रयम्
पञ्चलक्षं धनुर्वेदं धनुष्षोडशमुच्यते ८०
गजस्थञ्चैव चत्वारि हयस्थं चतुरेव हि
रथस्थञ्च चतुष्षष्टि आयोधनञ्चतुरो भवेत् ८१
पञ्चार्थन्तु प्रपञ्चतु प्रत्येकं लक्षमुच्यते
अष्टादश पुराणन्तु प्रत्येकं लक्षमुच्यते ८२
शैवं पुराणं प्रथमं द्वितीयं लिङ्गमुच्यते
तृतीयं स्कन्दपुराण स्कन्दोक्तं पावमानकम् ८३
विद्येश्वरपुराणन्तु चतुर्थं परिकल्पितम्
-------------- पुराणं च पञ्चमं परिकीर्तितम् ८४
देव्या पुराणं षष्ठन्तु पुराणानां तु चोत्तरम्
सप्तमातृ पुराणन्तु सप्तमं परिपठ्यते ८५
अष्ठमेकादशं रुद्रं नवमं शतरुद्रकम्
दशमं कोटिरुद्रन्त्वेकादशं विष्णुपुराणकम् ८६
द्वादशं मत्स्यकं प्रोक्तं कूर्मञ्चैव त्रयोदशम्
चतुर्दशं वराहं च पञ्चादशञ्च सिंहकम् ८७
षोडशं मनुपुराणञ्च उपपुराण सप्तदशम्
कैलासाख्य पुराणन्तु अष्टादशमिति स्मृतम् ८८
मानवं प्रथमं धर्मं वासिष्ठन्तदनन्तरम्

आपस्तंबं तृतीयन्तु गौतमन्तदनन्तरम् ८९
भारद्वाजं च निरसं देवतारं च रक्षकम्
सुमन्तुर्जैमिनी तन्त्रम् शंखस्थलीयतस्य च ९०
ज्ञेयवत्सं नारदीय बार्हस्पत्यमेव च
विश्वामित्रमगस्त्यं च धर्ममष्टादशं भवेत् ९१
प्रत्येकमयुतं चैव मयाप्रोक्तमृषीन्प्रति
सौम्यानि कामिकादीनि रौद्राः पाशुपतादिकाः ९२
रौद्रं सौम्येन यष्टव्यम् सौम्ये रुद्रं विवर्जयेत्
नवयामळतन्त्राणि प्रत्येकं लक्षमुच्यते ९३
लाकुळं यामळं चैव शुद्धशैवमिति स्मृतम्
मिश्रं सोममिति प्रोक्तम् आदिशैवार्हकं भवेत् ९४
रौद्रेण स्थापकं वक्ष्ये सर्वयत्नेन दर्शनम्
विश्वामित्रो थ वाल्मीकिः काश्यपश्चाङ्गिरस्तथा ९५
गौतमो गालवो गार्गो वासिष्ठश्चोशनस्तथा
त्रिष्टुप्चैवानुष्टुप्छन्दो विकृतिरेव च ९६
जगती शक्वरी चैव उक्तमित्युक्तमेव च
एतच्च छन्द इत्युक्तं छान्दसानी विधीयते ९७
ब्रह्मविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
कालरुद्रो नीलरुद्रः प्रळयानिलसदाशिवः ९८
रुद्रैकादश नवशक्तिश्च देवतानां प्रकीर्तिताः
कामिकादीनि तन्त्राणि अष्टाविंशच्छतं भवेत् ९९
एकतन्त्रमिदं सर्वं संकरन्नविधीयते
पाशुपतादितन्त्राणां तन्त्रसंकरमुच्यते १००
बौद्धादि षट्समयं चैव प्रत्येकं च स्वतन्त्रभाक्
तत्तत्तन्त्रस्य निष्ठा च तत्तत्कर्म समाचरेत् १०१
षट्समयमादिशैवानां पूजायामर्हा भवेत्

आदावेव तु शैवत्वादादिशैव इति स्मृतः १०२
स्थूलसमयं सूक्ष्मं च द्वेधासमयमुच्यते
बौद्धमार्हतं शैवं च न्यायं वैशेषिकन्तथा १०३
लोकायतञ्च सर्वे ते स्थूलं समयमिष्यते
बौद्धमार्हतशैवञ्च पाशुपतं च लाकुलम् १०४
पाञ्चरात्रञ्च इत्येते षडेते समयास्स्मृताः
कौशिकः काश्यपश्चैव भारद्वाजो त्रिरेव च १०५
पराशरश्च पञ्चैते पञ्चवक्त्रेषु दीक्षिताः
शिवेन दीक्षितश्चैव शिवब्राह्मण उच्यते १०६
शैवभेदास्समाख्यातो अष्टाविंशतिसंख्यया
सङ्करोप्येषु भेदेषु न दोषाय प्रकल्पते १०७
एकस्यैव हि भेदो वा न भवेत्तत्र सङ्करः
शैवतन्त्रार्हका प्रोक्ता आदिशैवा इति स्मृताः १०८
शिवश्शिखा तथा ज्योति सावित्री व्योमसंज्ञिकाः
एते तु गोचराः प्रोक्ताः कौशिकादि ऋषिस्तथा १०९
शिवस्सदाशिवश्चैव ईशानो ब्रह्मव्योमकाः
कुलेष्वेतेषु सञ्जाता आदिशैवा इति स्मृताः ११०
आदिशैव इति प्रोक्तस्सशिव ब्राह्मणो गुरुः
देशिकस्थापकश्चैव तस्य पर्याय वाचकाः १११
आदावेव तु शैवत्वात् आदिशैव इति स्मृतः
शिवेन दीक्षितश्चैव शिवब्राह्मण उच्यते ११२
सर्वेषां च गुरुत्वाच्च गुरुरित्यभिधीयते
देश आदिश्यते यत्र सदेशिक इति स्मृतः ११३
लिङ्गस्थापनयोग्यत्वात् स्थापका इति कीर्तिताः
काणश्च मत्सरी धूर्तो दीर्घाङ्गो बधिरश्शठः ११४
शिपिविष्टो दुराचारो दुश्चर्मा कुनखः कृशः

खञ्जश्च श्यावदन्तश्च वामनः कृपणो जडः ११५
नास्तिको विकृती स्थूलः पिङ्गाङ्गो रोमशस्तथा
हीनांगो ----------- गतः पापकर्मकृत् ११६
सरोगो विकटाङ्गश्च बालोवृद्धस्तथैव च
एतैस्तु लक्षणैर्युक्तो शिवस्थापनवर्जितः ११७
इति योगजे क्रियापादे तन्त्रावतारपटलः

अथ वक्ष्ये विशेषेण अघोरास्त्रं वरानने
रक्तवस्त्रधरं देवम् भिन्नाञ्जन समप्रभम् १
भुजाष्टक समायुक्तम् ऊर्ध्वकेशं सुदंष्ट्रकम्
स्पष्टदष्टाधरोष्ठाढ्यन्दीप्ताग्नि समलोचनम् २
किंकिणीमालयाभूष्यं पादनूपुरसम्युतम्
अष्टायुधसमायुक्तम् वामपादन्तु सुस्थितम् ३
पङ्कजासनमध्यस्थं त्रिणेत्रं चारुरूपिणम्
शूलं वज्रन्तु वेताळं खड्गञ्चैव तु दक्षिणे ४
डमरुन्दक्षिणे हस्ते वामे वै शूलहस्तकम्
घण्टां खेटं कपालं च वामहस्ते समन्वितम् ५
एवमायुधसंयुक्तं वामपादं पुरस्सरम्
सर्वशत्रुक्षयञ्चैव युद्धे तु विजयं भवेत् ६
इत्थं रूपधरं देवमघोरास्त्रं वरानने
सात्विकं राजसं चैव तामसं च त्रिधा भवेत् ७
आसनं श्वेतरूपन्तु सात्विकञ्चेति कीर्तितम्
रक्तवर्णं स्थितं देवं राजसञ्चेति कीर्तितम् ८
यानमार्गस्थितं रौद्रं तमोरूपमिति स्मृतम्
तामसन्त्विति विख्यातं अघोरास्त्रमिति स्मृतम् ९
तामसं सात्विकं ज्ञेयं तत्तद्वर्णं विधीयते ।

पद्मदळे द्वादश --- क रव्येनवावृते वर्णशतैन्निवात्वमध्येऌरं
पूर्वदळादि मन्त्रं समुद्धरेत्साङ्गमघोरमस्त्रम् ॥ १०
नव्याधयो नापि विषोपसर्गैर्न भूतप्रबाधनचोरप्रबाधा ।
न च शत्रुबाधा न शस्त्रबाधा अघोरास्त्रमिदं स्पृशन्ति ११
इति योगजे क्रियापादे अघोरास्त्रविधिर्नाम द्वितीयः पटलः

अथातः संप्रवक्ष्यामि मन्त्रोद्धारविधिक्रमम्
अज्ञानार्णवमग्नानां सर्वेषां प्राणिनाम्मयम् १
सर्वपापविनिर्मुक्तं मन्त्रोद्धारं कथं प्रभो
ईश्वार उवाच
मन्त्रोच्चारमहं वक्ष्ये श्रुणुष्वेकाग्रमानसा २
मननत्राणधर्मित्वान्मन्त्रमित्यभिधीयते
मननं सर्वतत्वार्थं जगत्त्राणन्तथैव च ३
चराचरादिभेदेषु सामान्यं शिवमन्त्रकम्
सर्वार्थं बोधयिष्यामि शिवमोंकाररूपिणम् ४
अकारादिक्षकारान्तं सर्वं मन्त्रमिति स्मृतम्
यत्कार्यं मनसा ध्यत्वा तन्मन्त्रमिति कथ्यते ५
मन्त्रं विना क्रिया नास्ति तस्मान्मन्त्रमिहोच्यते
महेन्द्रे मलये चैव सह्ये विन्ध्ये तथैव च ६
केदारे निषधे चैव गृहे वापि विशेषतः
गङ्गातीरे समुद्रे वा प्रासादे वा विशेषतः ७
नद्यास्तीरे तटाके वा अन्ये च शुभदेशके
मन्त्रमुद्धारयेत्तत्र स्थानन्दक्षिणवत्कुरु ८
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः
विघ्नेशं पूजयेत्तत्र पश्चान्मन्त्रं समुद्धरेत् ९
सितं वा रक्तधातुं वा पीतधातुमथापि वा

द्वादशारस्य चक्रस्य तन्मध्ये वृत्तमालिखेत् १०
यावदक्षरसंख्याभिः तावच्चक्रं समालिखेत्
शिवे तत्वे परे सूक्ष्मे बिन्दोरुत्पत्तिरुच्यते ११
बिन्दोर्नादस्समुत्पन्नर्नादाछशक्तिस्तु जायते
शक्तेस्तु वाक्भवं जातं वाक्भवात्षोडशाक्षरम् १२
कलाभिर्व्यञ्जनं जातं व्यञ्जनात्सर्वशास्त्रकम्
आकाशात्संभवा रेखा द्वितीयन्त्वर्धचन्द्रकम् १३
तृतीयं कुटिलाकारं चतुर्थं वह्निसम्भवम्
पञ्चमन्तु ध्वजाकारं शिवविष्णु समायुतम् १४
शिवमन्त्रमिदं प्रोक्तं सर्वप्राणिमयं भवेत्
सान्तं सर्वगतं शून्यं मात्राद्वादशसंस्थितम् १५
ह्रस्वा ब्रह्मसमाख्याता दीर्घाह्यङ्गमिति स्मृतम्
षष्ठन्त्रयोदशान्तं च पञ्चमे विनियोजयेत् १६
शिवविष्णुसमायुक्तं शिवमन्त्रमिति स्मृतम्
कण्ठमोष्ठद्वयोपेतं मूलदण्डसमायुतम् १७
मूलमन्त्रमिदं प्रोक्तं सर्वेषां प्राणिनामिदम्
पञ्च पञ्च चतुर्थस्य पञ्चमं पञ्च पञ्च च १८
षष्टमं पञ्च पञ्चानां मायाबीजसमन्वितम्
सप्तमस्य चतुर्थ्यन्तं तृतीयाक्षरसम्युतम् १९
यमबीजसमायुक्तं शिवमन्त्रमिति स्मृतम्
भूतान्तान्तं च भूतान्तं भूतभूतान्तसम्युतम् २०
लिङ्गपीठसमायुक्तं मूलमन्त्रमिति स्मृतम्
अम्बरं अम्बरादिञ्च व्यञ्जनान्तं यमैर्युतम् २१
वसुमती जलवह्निं च मरुत्षष्टिकयायुतम्
लिङ्गपीठसमायुक्तं सर्वकामार्थसाधकम् २२
भूतान्तं तृतीय संयुक्तं मायादीर्घसमायुतम्

आधाराधेय संयुक्तं शक्तिबीजमिति स्मृतम्  २३
गन्धर्वं प्रथमञ्चैव वह्निमायासमन्वितम्
शिवविष्णुसमायुक्तं गौरीबीजमिति स्मृतम्  २४
आकाशं वह्निमायान्तशिवविष्णुसमायुतम्
यान्तं वह्निसमायुक्तं कलाचतुर्थसम्युतम्  २५
आधाराधेयकोपेतं गङ्गापूर्वाग्निकैर्युतम्
कलाचतुर्थकोपेतम् उमामन्त्रमिति स्मृतम्  २६
षष्टमस्य चतुर्थस्य वह्निमायासमन्वितम्
प्रथमस्य तृतीयन्तु तृतीयस्यान्तसम्युतम्  २७
पञ्चमस्यादिमं बीजं चतुर्थाच्च समायुतम्
मायाबीजयुतञ्चैव वारुणं वह्निवारुणम्  २८
अग्निबीजसमायुक्तं सर्वलोकवशं स्मृतम्
स्वाहान्तं गणपतिमन्त्रम् उमामन्त्रसमायुतम्  २९
शक्तिगायत्रिरित्युक्तं सर्वलोकवशन्नयेत्
आकाशादिसमायुक्तं सर्वलोकवशन्नयेत्
स्कन्दमिति स्मृतम्  ३०
आयोदशान्तसंयुक्तं पञ्चमे विनियोजयेत्
लिङ्गपीठसमोपेतं षष्ठसप्तमसंयुतम्  ३१
सर्वगं पर्वसंयुक्तं मायाबीजसमायुतम्
तद्वर्गमन्त्रचतुर्थेन द्वितीयाक्षरसंयुतम्  ३२
मरुद्बीजमिदं मन्त्रं आत्ममन्त्रमिति स्मृतम्
स्वनामाद्येन मन्त्रेण बीजनादसमन्वितम्  ३३
ओंकारादि नमोन्ताश्च मन्त्रास्सर्वे समाहिताः
दात्वा तृतीया प्रथमान्तभिन्नो कला महीलक्षणमामनाद्याः  ३४
जीवत्रियुङ्ना नवमान्तमेयुतं तमोमरुद्व्योम च मूलमन्त्रम्
ओंकारदीपितास्सर्वे नमस्कारान्तमातृभिः  ३५

स्वनाममध्यमे योज्य सर्वमन्त्रं प्रशस्यते
हुंफट् च विसर्गान्तं मन्त्रं पाशुपतं स्मृतम्  ३६
मृं जृं चृं नेत्रमस्यादिर्मन्त्र दशबीजकम्
शिच्छीकृद्दिचुकृच्चैव चुरिकास्त्रमिहोच्यते  ३७
अथातः संप्रवक्ष्यामि शिवमन्त्रस्य लक्षणम्
पञ्चाक्षरमयं शैवं शिवमोंकाररूपिणम्  ३८
व्योमव्यापि महामन्त्रं चक्रमध्ये प्रतिष्ठितम्
द्वादशारस्य चक्रस्य विभिन्नस्य द्विधा भवेत्  ३९
वृत्तं पञ्चदशेनैव मध्ये शिवमयन्नयसेत्
पूर्वाकारार्धमूले तु नेकारं विन्यसेद्बुधः  ४०
तस्य प्रदक्षिणवशादक्षरं विन्यसेद्बुधः
तेन ताश्चैव रवया हुंफडाश्च नयप्र  ४१
न निशश्चैव फाञ्चं च भश्चन्नेताश्च क्ष्मिश्चज्ञा
र्पश्च मश्च पदे दैक क्रमेण पदविन्यसेत्  ४२
षश्रिस्थश्च ममूयश्च योनिपातश्च षडानन
प्रपाश्च सश्च मुश्चैव वश्च सावश्च सावाबः  ४३
सश्च नश्च इति ख्याता द्वितीया वरुणे न्यसेत्
व्यानासनश्च नश्चैव दश्च मूर्तश्च अश्चरू  ४४
वेश्च रूश्च तिते स्वश्च शिवाय हश्च दश्चना
क्षश्च पश्च वमोश्चैव तृतीया वृतिसंलिखेत्  ४५
उर्वश्च यश्च ओंभूतप्रेतिश्च नाश्च वै
अद्योनाश्चैव ओं वश्च ते तर्वप्रश्च अश्चसा  ४६
भश्च शीतश्च एतेषां चतुरावरणे स्थितिः
सयवीरं रजागोश्च ज्योति पित्किश्च अश्च वै  ४७
हश्च हापखश्चैव रतिविक्षय पञ्चमे
यथागराय व्योमभ्यो ये ये रे इज्यो ह्यभुश्चनेत्  ४८

मधु वसुश्च वस्थिश्च ससुवाश्चैव षष्ठके
भानायाभाश्च वा अश्य द्यों ह्याता अश्च अश्चज ४९
भश्च ओंच सरगाशश्च तद्रश्चर्वश्च तं चशी
सप्तमे पदविन्यासे चतुर्विंशतिकाचरम् ५०
रुश्च कश्च नयश्चैव शिश्च यश्च संसुश्च च
रूयश्च विन् च स्तेकश्च भूनिश्च येम गुरू च ५१
आपसूयश्च ते सर्वे सदाष्टकमपि न्यसेत्
मयानानेश्च वेत्राश्च यश्च निधिराश्च व ५२
व्याज म ओ नश्च भेज सर्वश्च ष्णुश्च त
शब्द पाश्च नया संख्या क्रमेण परिपठ्यते ५३
व्योमाश्च नेह वह्ना वा गावपिन् तेश्च धूश्च धू
धमश्च ते प्रधश्चैव पिततं शं पदेश च ५४
नेनशायो वृषश्चैव व गुं गु घोरश्वस्य पास्यते
अधूनिश्च महा मद्ध ब्रह्मताश्च वश्चरूब्दम् ५५
एकादश पदे लेख्यास्सर्वेषां आत्मनः फलम्
अश्च ययोर्वश्च रूश्च वश्च म एव च ५६
वश्च शश्च मिडश्च अग्निश्च धूश्च नमात्मज
यश्च भश्च बृहश्चस्तु रूशन्न द्वादशे पदे ५७
गुह्याय वाक्यं सपुने समेव्यो व्रत धूधर
प्रध्वोर अस्तनाश्चैव ओन्त्रयोदशके पदे ५८
वाधूनि यत तत्मश्च धरमन्म अनाति पश्चञ्चश्च भक्तश्चै ।
रूज्ञार्वश्चतुर्दशे । व्योंशियश्च रवायश्च नाना पप्योश्च ५९
यश्च प । नाश्च कश्च पपेमुश्च खव्योच्चतुनसश्च
एवं पञ्चदशे वृत्तं व्योमव्यापिरिति स्मृतम् ६०
व्योमव्यापिरिदं मन्त्रं व्योमव्यापि गतो गुरुः
व्योमव्यापि महामन्त्रमृषिछन्दो देवतां कुरु ६१

अगस्त्य ऋषिस्त्रिष्टुप ईश्वरस्तत्र देवता
अथसद्यादिमन्त्राणां उद्धारणं वदाम्यहम्  ६२
शिवाङ्गवत्स्थितं चक्रं सप्तमावरणैर्विना
पूर्वाकारार्थमूले तु प्रणवन्दीपकन्नयसेत्  ६३
मिकारं च ततः स्थाप्य सविसर्गो म एव च
खश्च पश्च विसर्गेण मोश्चलश्चक एव च  ६४
मोश्च श्चयकारश्च मनाभ्यर्गकमेव च
रश्च तश्च विसर्गेण स्तेपुभानोस्तथैव च  ६५
ईश्च मीश्च तया बुश्च शिकारं ओश्च इति स्मृतः
द्यानभक्तश्च नद्राश्च मकारं विसर्गयुक्  ६६
नश्च भूश्च नादश्च त्रह्ये घर्वसम्युतम्
सविसर्गो मकारश्च तन्मतश्चैव एव च  ६७
ओंकारं चैव नाकार नाह्मा शीकारमेव च
पश्च वैश्च वोयश्च यश्चरुश्चनयस्तथा  ६८
णश्चतश्च मनावोश्च वभ्योश्च सश्चन एव च
ओमश्च येभिश्च यान्याता बृश्च ताश्च तथैव च  ६९
प्रश्चयश्चैव नाभश्च वामो यश्च नरस्तथा
मश्च भ्रमकरोभ्योभ्यो सविसर्गह्यात्म एव च  ७०
मेश्च वश्च विभ्रती स क्रमेण परिपठ्यते
तश्च ताश्च तथैवेमान्देन लाकारमेव च  ७१
पुश्चर्पश्च तथामोश्च ओं फारैर्पश्च एव च
पैश्च वीश्च तथा धी च चोर्पर्पस्तु च एव च  ७२
जाजाभश्च तथा स्वश्च --- तथैव हि
रकम्पविलसश्चैव नमधश्च तसश्चरु  ७३
ययप्रस्ससधीयंश्च षष्ठमे पदविन्यसेत्
द्योद्योवेजश्च पाषाम विलयश्चस्य एव हि  ७४

नश्च भरश्चैव सर्वश्च तद्रश्च तथैव च
षादवाश्चैव दृनीश्चैव वरणश्चैव सप्तमे ७५
सस्यश्च भश्च भिश्चैव श्रों ज्ये श्चालस्तथा
वलमोश्च ननायश्च यश्च वाश्च रू शरूः ७६
देरूशामं महाश्चैव अष्टमे पदविन्यसेत्
एवं सद्यादिमन्त्राणां द्विर्नवतित शतं भवेत् ७७
द्वात्रिंशदक्षरं सद्यं षट्षष्टिर्वाममन्त्रकम्
अघोरं षट्त्रिंशकैर्युक्तं चतुर्विंशति पूरुषम् ७८
त्रयस्त्रिंशदीश्वरं चैव प्रणवेन समायुतम्
ऋषि छन्दो देवतानाम् अधुना संप्रवक्ष्यते ७९
कौशिकः काश्यपश्चैव भारद्वाजोऽत्रिरेव च
पराशरश्च पञ्चैते सद्यादि ऋषिरुच्यते ८०
अनुष्टुप्त्रिष्टुप्छन्द आर्यो वृत्तकमेव च
गायत्री चैव पञ्चैते सद्यादि च्छन्दसस्मृताः ८१
ब्रह्मविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
सद्यादीनां तु पञ्चानां देवताः परिकीर्तिताः ८२
ऋग्यजुस्सामाथर्वश्च चतुर्वेदान्तसारकम्
सद्यादिमन्त्रमुद्धारं गम्यते तदुदाहृतम् ८३
गज्यं ब्रह्ममिति प्रोक्तं गछामङ्गमिति स्मृतम्
ब्रह्माङ्गमूलरूपस्य सूक्ष्ममोंकाररूपकम् ८४
सूक्ष्मरूपं शिवं प्रोक्तं स्थूलरूपं सदाशिवम्
पूर्ववच्चक्रं विन्यस्य चतुरावरणैर्विना ८५
ओंकारश्च लवोशिश्च तेशुयश्च पुनश्चफम्
शश्चैव तथा यो भूय श्चैव तथापरम् ८६
सान्ते च सकसा भूयो वश्चजस्सविर्गकः
हन्ति च ततश्चाच गश्च यश्च तथान्तकम् ८७

द्वारर्प च न्तथैवस्यान्नदीर्घोश्च द्वितीयकः
पुकारश्च रकारश्च विकारप्रचविस्तरम् ८८
कौकावर्पयार्णश्च इळारः प्रणवस्मृतः
चर्मायन्ते पुनर्णे च रन्ध्यनज्ञहिकौ तथा ८९
दश्च पूश्च तथागश्च हेश्च भूयोन्त एव च
प्ररू प्रमा विसर्गेण मकारं पिंगशस्सुकः ९०
मोन्ते षष्ठस्य मार्गस्य कारुशाशवगाकरी
कहो चैव तताहाच यक्रमायश्चरा पुनः ९१
लकारस्पुश्च देकार परूनाक क नमेपथ
प्यमाकमराचैव भश्च पाच ततोन्ततः ९२
स साहूयश्च ताम्भश्च किळवेशश्च यस्ततः
मेद्या नादद्वितीयश्च कंधि प्राश्च मम मीश्वधि ९३
श्वसौ शि यववान्तुश्च विघाम्याश्च म एव च
रद्यवज्वत्त चासूर्य रमाश्चैव ततश्च हि ९४
प्रबप्रली भद्दमो सतखातञ्चतुर्दश
रावसानि ममावश्च द्विराता नो विरामतः ९५
यभन्नास्वाश्च माज्ञाच ज्ञकारा पुनयाश्चशि
योकारश्च वनोहा च घोया चष्टा चनुस्ततः ९६
घाचावन्ते पुनर्भाच हश्चमो च तथोन्वरः
रमतस्तरुता प्रश्च ययोस्तु शिशिकमास्ततः ९७
तथा तत्र वकारश्च भ ----- यवो ततः
योद्गते वाप प प्रज्ञा वयदेभुदे पुनस्ततः ९८
गमोस्त्वात्मश्च वन्दश्च शबस्तम्भश्च वि चयात्
सन्न सञ्च तथा भ क वीय निहौस्तथा ९९
यश्च तश्च तथोकारः भर्वेण प्रणव एव च
मगौ बलौ तथा यश्च गमजुंकार एव च १००

अन्ते वासुगो लब्ध गुहुप्रभे स ऊष्मणः
सर्वात्म संज्ञहृदयं कन्नाणानि तु सप्तमी १०१
ओंकारादि हकारान्तमुद्धरेत्क्रमशः पुनः
अष्टान्नरं शिवां तस्मात्सुशिवाक्यसमुद्धरेत् १०२
रिज्वनी परितस्तस्माछिशवामेकाकदशान्नरम्
षष्ठोत्तरशतं दद्यादन्नराणान्तु पिङ्गळम् १०३
अघोरास्त्रं ततस्त्रिंशद्द्वादशान्नर लन्नितम्
चतुर्विंशति गायत्री मुद्धरेत्क्रमशस्तथा १०४
नेत्रस्य अन्नरं तस्माद्विद्यानामालयं परम्
च --- क्तं विज्ञेयं अन्नराणां शतद्वयम् १०५
हृदयादि विभागेन कथिदं सिद्धिमुक्तिदम्
एवं शिवांगमित्युक्तं ब्रह्मलन्नणमुच्यते १०६
पदब्राह्मस्थनामानि पञ्चानां पञ्चविन्यसेत्
चतुर्थं च त्रीणि चात्र हकारान्तन्तु मध्यमम् १०७
आद्यन्ते कामिनीर्द्देशो विभज्यंते तु भामनि
अष्टषष्टयन्नरं शैवम् तकारात्परतस्ततः १०८
हार्दन्तु पञ्चमन्तर्वा त्रिंशदादिषु मूर्च्छितम्
ईकारमूर्च्छितं शैव द्वितीयन्तु ततः परम् १०९
पञ्चान्नरं चतुर्थ्यन्तन्नाम्ना देवमतः परम्
एकोनविंशतं वाममैकारन्त मनोततः ११०
शर्वसर्वात्मना ब्रह्म पदमेकञ्चतुर्थकम्
ऐकारश्च रसद्भिन्नं वाकारद्वयकन्नयसेत् १११
द्विरीभ्यास पदादेकमष्टमाश्चैवमन्नरम्
आदित्रीणि पदान्त्यन्ते प्रमूर्च्छिन्नामतः परम् ११२
पूर्वमेव द्विरभ्यासान्पदमन्यान्नरं विना
योगाधिप पदव्यादीन्पदान्तं परमन्ततः ११३

अन्नबिन्दुद्वयं क्षीणं न पदादष्टमं पदम्
जाक्षरात्सप्तमं शैव मामूर्छितमतोक्षरम् ११४
ततो मन्त्र समाप्तयर्थं मुञ्च मुञ्च पदात्पदम्
पञ्चमं विन्यसेद्धीमान् बीजस्य षोडशन्यसेत् ११५
वामपादादूर्ध्वपद ---------- सूक्ष्मद्वितीयकम्
ऐकारेण ततो भिन्नं रुद्राणयां प्रथमाक्षरम् ११६
अनन्तं पिङ्गळं तस्मात्समाप्तौ नवमाक्षरम्
गङ्गारी यत्कृतं यच्च न्यसेत्सूक्ष्मपदं यतः । पुनः । ११७
रुद्रनामचतुर्थ्यन्तं त्रिमूर्तिं त्रिभिरेव च
ताभ्यान्न पैङ्गळं दीर्घं कळकारादक्षरद्वयम् ११८
यन -- ति पूर्ववत्ताभ्याम् यथा संस्थन्तु पैंगळम्
गायत्र्यामक्षरं षष्ठं पैङ्गळं पूर्वमक्षरम् ११९
द्वितीयं परमं तस्माद्विद्याङ्गं शिरसोक्षरम्
अपयुद्य षकारस्थं शैवं द्विगुणविन्यसेत् १२०
यनतीति ततस्तस्मात् वामदेव पदानुगे
संस्थाप्य विन्यसेद्वर्णं धकारं पिङ्गळात्मकम् १२१
लकाराद्यष्टमं भूय स्थाप्य तत्र द्वितीयकम्
ळकारद्वय सम्भिन्नं कुर्यान्मन्त्रात्मवित्तमः १२२
बन्धकाराक्षरे द्वेन्ये सुशिवात्मं पैङ्गलं न्यसेत्
आद्यन्ततस्ततस्ताभ्यां विद्याङ्गास्त्र्यक्षरद्वयम् १२३
पञ्चाक्षराच्छिवाच्चैव षष्टमञ्च ततोक्षरम्
सर्वात्मकं द्वितीयं च पदन्तत्परतो न्यसेत् १२४
ब्रह्माण्डादेस्तृतीयस्य पदमध्ये पदस्य तु
विन्यसेदितरन्तस्य पदार्थस्यादिमाक्षरम् १२५
तृतीयन्तु ततश्चैव सप्तविंशकमेव च
द्वितीयस्य पदस्यान्तं पदं सूक्ष्माक्षरानुगम् १२६

इदमेव पदं सूक्ष्मं अम्बीजं परिकीर्तितम्
गायत्र्यामक्षरं चैव द्वितीयं विन्यसेद्बुधः १२७
त्रिमूर्त्यन्त नतीस्तस्मान्नियमाक्षरद्वयम्
न्यसेन्मन्त्रसमाप्त्यर्थं पुनर्यदुपवर्णितम् १२८
विद्याङ्गास्त्र तृतीयन्तु ह्योकारात्परतोक्षरम्
विन्यस्य तु पुनस्तस्मादघोरादीनि विन्यसेत् १२९
अघोरास्त्रात्मकाद्वर्णात्सप्तमाष्टम घोरतः
योभ्योकारमतो भावं पुनरेवाक्षरद्वयम् १३०
पैंगळं सघोराक्षरं स्थाप्य तच्चक्रोपरिस्थितम्
विन्यसेदेकरुद्रान्तं सर्पाकाराक्षरद्वयम् १३१
एकादशमघोरास्त्रं नकारं सविसर्गकम्
कर्मेन्द्रिय पदन्तस्मात्पुनर्मघोर्वश्च संयुतम् १३२
न्योकारश्च न तस्त्याज्ये धस्तेया शैवमेव च
रुद्राकारो ततो रूश्च व्येश्च व्यश्च ततः परम् १३३
चतुर्थस्य तु गायत्र्या षष्टमाद्यक्षरद्वयम्
न्यसेदेवं चतुर्थ्यर्थं महादेवपदं पुनः १३४
पदन्त्रयोदशोत्तरं तस्माद्गायत्र्यर्णञ्चतुष्टयम्
अन्त्यञ्चान्त्यन्तयोर्मध्ये नारुद्रास्तु शिवात्मकाः १३५
वामदेवोत्तरैर्हार्दैष्षष्ठां गायत्रिकाक्षरम्
सप्तमस्याद्यमेतानि ततो मध्यानि विन्यसेत् १३६
अष्टमन्नाक्षरं शैवं मनस्कर्म समन्वितम्
पदैशानादि भूयोपि विन्यसेत्परतो बुधः १३७
स्पर्शन्तं मात्रकस्यापि पदस्वोत्तरम्
सविसर्गे पुनर्नादि भूताक्षकाराक्षरद्वयम् १३८
शैववर्गा बिन्दुयुक्तं ब्रह्माचैवमतः परम्
यसोदाकार सम्भिन्नं एकारं वामदेवतम् १३९

धियत्पदे विपोतान्ने अष्टमं शाष्टमक्षरम्
ब्रह्मभूयस्ततोरेकम् पूर्ववत्कान्तरन्यसेत् १४०
अनन्तेशं चतुर्थ्यन्त वोहाद्यं शैवमष्टमम्
स्तुंकारस्तु चतश्शैव मन्वनन्तेशं च विन्यसेत् १४१
विन्यसेदेकरुद्रान्तमामूर्छेदमनृक्षरम्
ततः पञ्चम षष्ठे तु सर्वान्ते तु शिवात्मकौ १४२
अनुष्टुप्छन्द समायुक्तम् त्रयो मन्त्राः प्रकीर्तिताः
यजुषा वामदेवस्तु गायत्रेण चतुष्टयम् १४३
इति योगजे क्रियापादे मन्त्रोद्धारपटलः द्वितीयः

अथ वक्ष्ये विशेषेण शौचाचम विधिक्रमम्
प्रातरुत्थापयेन्मन्त्री शुद्धस्थानगते सति १
वल्मीके च शिवस्थाने जलाशये गुरुसन्निधौ
वृक्षसङ्घे च गोकाष्ठे पथि भस्मनि गोमये २
देवस्थानसमीपेतु नदीस्थाने विशेषतः
शिलायां पर्वतश्रेष्ठे कुर्यान्नावश्यकं बुधः ३
नगरग्रामपुरादीनां मध्ये चैव प्रयत्नतः
उत्तराभिमुखो भूत्वा तृणं प्रक्षिप्य भूतले ४
शिरोवस्त्रावकुण्ठी च उपवीतं च बाह्यतः
कुर्यादावश्यकं चैव मौनी भूतो शिवद्विजः ५
रात्रौ दक्षिणतः कृत्वा रविं दक्षिणतो पि वा
एवं कृत्वा ततो मन्त्री गच्छेत् प्रतिजलं बुधः ६
वामहस्तेन गृह्णीयात् प्रजनं चैव यत्नतः
मृत्पिण्डं दक्षिणे हस्ते गृह्णीयाच्च जलं बुधः ७
आमलीफलमात्रन्तु मृत्पिण्डं पञ्चधा गुदे
दशयाक्षाळयेद्वामम् मृत्पिण्डेन पुनः पुनः ८

दक्षिणे समृत्त्रीणि नखलिङ्गन्तु शोधयेत्
गन्धलेपक्षयकरं शौचं कुर्याच्छनैः शनैः ९
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्
त्रिगुणं वानप्रस्थानां यतीनान्तु चतुर्गुणम् १०
यावन्मात्रं मनश्शुद्धिस्तावच्छौचं समाचरेत्
अथ वक्ष्ये विशेषेण आचमनस्य विधिक्रमम् ११
प्राङ्मुखोदङ्मुखो भूत्वा शिखाबन्धन्तु कारयेत्
सव्य यज्ञोपवीती च पादप्रक्षाळनं शुचिः १२
नान्तर्जले न तिष्ठंश्च न हसन्नब्रुवंस्तथा
ब्राह्मणानां दक्षिणकरे पञ्चतीर्था भवन्ति हि १३
सपवित्र करेणैव सर्वकर्म समाचरेत्
स्थले तु दक्षिणं पादं वाम पादं जले स्थितम् १४
ब्रह्मविष्णुश्च रुद्रश्च मखवानिति शैवकम्
अङ्गुळीनाममेतद्धि पञ्चतीर्था भवन्ति हि १५
अङ्गुळ्यग्रे रुषातीर्थ अङ्गुळी मध्यदेविकम्
तर्जन्यङ्गुष्ठयोर्मध्ये पैतृकं तीर्थमुच्यते १६
अङ्गुष्ठाङ्गुळिरेखायां ब्रह्मतीर्थमुदाहृतम्
ब्राह्मणानां करे मध्ये अग्नितीर्थमुदाहृतम् १७
गोकर्णवत्करतले माषमग्नजलं ग्रहेत्
त्रिःपिबदृग्यजुस्सामाः प्रीणन्ति द्विः परिमृजेत् १८
अथर्वेतिहासाः प्रीणन्ति मुखमेकन्तु संस्पृशेत्
अङ्गुष्ठानामिकाभ्यान्तु चक्षुषी समुस्पृशेत् १९
अङ्गुष्ठ तर्जनीभ्यान्तु नासिके संस्पृशेद्बुधः
तथाङ्गुष्ठकनिष्ठाभ्यां श्रोत्रे चैव तु संस्पृशेत् २०
बाहूनङ्गुष्ठमध्यात्तु नाभिमङ्गुष्ठेन स्पृशेत्
सर्वाङ्गुळीभिर्हृदयम् शिरोवै सर्वतोङ्गुलम् २१

एवं कृत्वा तु मन्त्रज्ञेः प्रत्यङ्गेष्वपि संस्पृशेत्
शिरः पादौ तथाभ्युद्धय ऋषीणां सप्ततृप्तये २२
मूर्ध्नि चक्षुस्पृशेनैव शर्वादित्ये तु काष्ठ च
नासां वै संस्पृशतः प्रीतिमाश्विन्य देवताः २३
बाहूनाभिश्च हृदयम् इन्द्रविष्णवग्निरेव च
मूर्ध्नि संस्पृशेनेनैव सर्वदेवप्रियं भवेत् २४
क्षुधे च कफजाते च पाद्यमाचमनं कुरु
अङ्गुष्ठेनान्यं संस्पृश्य पश्चादाचमनं भवेत् २५
एवमाचमनं प्रोक्तं मन्त्रस्नानविधिं श्रुणु २६
इति योगजे क्रियापादे शौचाचमनविधिपटल तृतीयः

अतः परं प्रवक्ष्यामि स्नानं पापहरं परम्
मृत्पिण्डं गोमयं पुष्पं तिलमामलकं कुशम् १
सद्यमन्त्रेण सङ्गाह्य नदीं गच्छेत्समुद्रगाम्
तटाके वापि कूपे च हृदे निम्नजलेपि वा २
आचम्य विधिवत्पूर्वं पादौ हस्तौ च क्षाळयेत्
जलस्नानं पुराकृत्वा मन्त्रस्नानमतः परम् ३
सद्योजातेन मन्त्रेण मृत्पिण्डन्तु त्रिधा भजेत्
पूर्वं च दक्षिणं चैव उत्तरं च प्रकल्पयेत् ४
पूर्वं तत्पुरुषेणैव अघोरेणैव दक्षिणम्
वामदेवेन मन्त्रेण उत्तरं चाभिमन्त्रयेत् ५
अस्त्रेण प्रक्षिपेद्दिक्षु दशस्वपि यथाक्रमम्
दक्षिणेन मृदा चैव अङ्गमालिप्य मन्त्रतः ६
शिरोवक्त्रं च हृदयं गुह्यं पादौ विभागशः
हृदयेनैव घोरेण सर्वाङ्गमुपलेपयेत् ७
उत्तरेण मृदञ्चैव शिवतीर्थं प्रकल्पयेत्

स्नानार्थे चोपचारेण सुगन्धामलकादिभिः ८
पञ्च ब्रह्मशिवाङ्गैश्च अभिषेकं प्रकल्पयेत्
गोमयेन पुनश्चैव स्नापयेदुपलिप्य च ९
कलशमुद्रां बद्ध्वा तु प्रासादेनाभिषेचयेत्
तत्तीर्थन्तु समासाद्य रजन्यालेपनं कुरु १०
पश्चात्स्नानं समासाद्य आचम्य च यथाविधि
सद्येनैवोदकं प्राश्य ईशानेन तु मार्जयेत् ११
तत्पुरुषेण मन्त्रेण जपेदष्टशतं बुधः
सूर्यश्चेति मन्त्रेण उदकं प्राश्य यत्नतः १२
पश्चादाचमनं कृत्वा दधिक्राविरणेति प्रोक्षयेत्
भूर्भुस्वेति मन्त्रेण पूर्वे पूर्वे च निक्षिपेत् १३
उपस्पृश्य ततो जप्त्वा पञ्चब्रह्मषडङ्गकैः
कलामन्त्राणि सर्वाणि व्योमव्यापिन्तथैव च १४
देवानृषीन् पितृंश्चैव तर्पयित्वा यथाक्रमम्
देवांश्च वामदेवेन अघोरेण ऋषींस्तथा १५
पितृणां सद्यमन्त्रेण एवमेव क्रमेण तु
तर्पयित्वा विधानेन आचम्य विधिवद्बुधः १६
दैविकेन तु तीर्थेन देवान्तर्प्योदपुष्पयुक्
आर्षेण तु तीर्थेन ऋषीन्सर्वांश्च तर्पयेत् १७
पैतृकेन तु तीर्थेन पितृन्सर्वांश्च तर्पयेत्
अपसव्यकरेणैव उपवीतकत्रयेण तु १८
आचम्य तु विधानेन व्योमव्यापिन्तथैव च
श्रीरुद्रं पुरुषसूक्तं च विष्णुसूक्तं जपेद्बुधः १९
हुंकारेण तु मन्त्रेण तीर्थं चैवोपसंहरेत्
पुष्पेण ऋषिदेवांश्च तिलेन पितृतर्पणम् २०
कुशपुष्पाणि सर्वाणि सर्वकर्म समाचरेत्

सावित्र्याश्च जपन्तत्र यावच्छक्ति समाचरेत् २१
उदुत्यं चित्रमन्त्रं च हंसश्शुचिन्ततो जपेत्
प्रदक्षिणन्ततः कृत्वा गुणसंख्या तथैव च २२
पुष्पहस्तं गृहीत्वा तु आलयं प्रविशेद्बुधः
अतः परं प्रवक्ष्यामि भस्मस्नानविधिं परम् २३
गावश्शिवपुरात्पञ्च क्षितिं प्राप्तश्शिवेच्छया
पञ्चगावस्समुत्पन्नास्सर्वलोकस्य मातरः २४
नन्दा भद्रा च सुरभिः सुशीलास्सुमनास्तथा
कपिलं श्वेतकृष्णं च धूम्रं रक्तन्तथैव च २५
नन्दादि सुमनान्तं स्याद्वर्णमेतत्प्रकीर्तिताः
सर्वलोकोपकारार्थन्देवानां तर्पणाय च २६
गोमातरस्स्थिता भूमौ स्नानार्थं च शिवस्य च
गोमयं रोचना मूत्रं क्षीरं दधिघृतं गवाम् २७
षडङ्गानि पवित्राणि सर्वसिद्धिकराणि च
गोभिर्यज्ञाः प्रवर्तन्ते गोषु देवाः प्रतिष्ठिताः २८
गोभिर्वेदास्समुत्तीर्णास्सषडङ्गपदक्रमाः
शृङ्गमूले गवान्नित्यं ब्रह्मविष्णुश्च संस्थिताः २९
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च
शिरोमध्येप्यहं वत्सं सहभूतै ------ ३०
आचमनं विधिवत्कृत्वा सन्ध्या कर्मसमाचरेत्
नोक्तकार्याणि सर्वाणि पूर्ववत्कारयेत्सुधीः ३१
माहेन्द्रं स्नानमाख्यातं मारुतस्नानकं श्रुणु
गोपांसुन्तु समावेश्य गोधूळिं पञ्चगव्यकम् ३२
गोगन्धेन समाविष्टं मूलमन्त्रशतं जपेत्
पश्चादाचमनं कृत्वा नोक्तं पूर्ववदाचरेत् ३३
मारुतं स्नानमाख्यातं मन्त्रस्नानमतः श्रुणु

पादप्रक्षाळनं कृत्वा चमनं विधिवत्कुरु ३४
ताम्रपात्रे जलं ग्राह्य आपोहिष्ठेति मन्त्रतः
हिरण्यं पवमानं च कुशैश्च प्रोक्ष्य बुद्धिमान् ३५
अन्य कर्माणि सर्वाणि पूर्ववत्कारयेत्सुधीः
वारुणं भस्म माहेन्द्रं मारुतं मन्त्रसंज्ञकम् ३६
एवं पञ्चविधं स्नानं सर्वकार्येषु योग्यकम्
इति योगजे क्रियापादे स्नानविधिपटलश्चतुर्थः

अथ वक्ष्ये विशेषेण अर्चनाविधिमुत्तमम्
अर्चनं द्विविधं प्रोक्तं आत्मार्थं च परार्थकम् १
अन्तरे स्थितिलिङ्गानां जङ्गमन्त्विति कीर्तितम्
पीठार्धेन समं लिंगं बन्धं जङ्गममुच्यते २
ब्रह्मविष्णुशिवैर्युक्तं स्थावरं लिङ्गमुच्यते
स्वयंभूरोहणं चैव देवमानुषराक्षसम् ३
बाणलिङ्गादि लिङ्गानां परार्थमिति कीर्तितम्
एषु नित्यं स्थितो देवो व्यक्ताव्यक्तन्तु मानुषम् ४
सन्ध्याकाले तु सुव्यक्तमव्यक्तं चान्यकालके
ब्रह्मविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ५
उत्तरादीनि मध्यान्तमप्रादक्षिण्यमूर्तिनः
बामं सद्यमघोरं च तत्पुरुषेशान नामकाः ६
उत्तरादीनि वक्त्राणि क्रमेण परिपठ्यते
सद्याद्धरोद्भवञ्चैव वामपादसमुद्भवम् ७
अघोरान्तेजसोत्भूतं पुरुषाद्वायुसम्भवम्
ईशादाकाशमुत्पन्नं इत्येते भूतसम्भवाः ८
आसनं मूर्तिमावाह्य ते तु त्रितयमध्वनि
आसनं शुद्धविद्यान्तम्मूर्त्तिश्शक्त्यन्तगोचरम् ९

आवाह्य सुशिवं प्रोक्तं एवं लिङ्गस्य पूजनम्
आसनं लिङ्गमित्याहुर्मूर्तिस्सदाशिवस्स्मृतः १०
सदाशिवं मन्त्रसम्भूतमष्टत्रिंशत्कलान्वितम्
मन्त्रन्यासं शिवं यावत्सदाशिवमिति स्मृतम् ११
अयं मन्त्रमिति ख्यातम् शिवं जन्यमिति स्मृतम्
आकाशात्सम्भवा रेखा द्वितीयमर्धचन्द्रकम् १२
तृतीयं कुटिलाकारं चतुर्थं वह्निसम्भवम्
पञ्चमन्तु ध्वजाकारं शिवविष्णुसमायुतम् १३
शिवमन्त्रमिति प्रोक्तं सर्वयोनिहृदिस्थितम्
अर्धाक्षरपदन्यासं शक्तिस्थानन्तु षट्पदम् १४
एतन्नयासकृतं नित्यम् लिङ्गस्य परिणाहकम्
विद्याङ्गास्त्रशिवाङ्गास्त्रमघोरास्त्रं पाशुपतास्त्रकम् १५
क्षुरिकास्त्रन्तु पञ्चैते शिवमन्त्रसमन्वितम्
शिवादुत्पद्यते शक्तिश्शक्तेरुत्पद्यते तथा १६
तस्यास्सदाशिवोत्पत्तिस्सदाशिवादीश्वरस्थितः
ईश्वराद्रुद्रसम्भूति रुद्राद्विष्णुसमुद्भवम् १७
विष्णोर्ब्रह्मा समुत्पन्नो ब्रह्मणो विश्वसम्भवम्
वाच्यवाचकरहितो वाङ्मनोतीतगोचरः १८
शिवं शुद्धमिति प्रोक्तमरूपीचाव्ययश्शिवः
वाच्यं सादाशिवं मन्त्रमावाह्यं शिवमन्त्रकम् १९
गुह्याद्गुह्यतरं गुह्यं स्वानुभूत्यावगम्यते
वृष्टिश्शक्तिमयं प्रोक्तं अदृष्टं शिवमुच्यते २०
लोकरक्षानिमित्ताय सदाशिवसमुद्भवम्
तस्मात्सर्वप्रयत्नेन पूजयेत्तु सदाशिवम् २१
लोकशान्तिकरं ह्येवं परार्थं पूजयेद्गुरुः
आत्मार्थं च परार्थं च आदिशैवार्हकं भवेत् २२

लिङ्गेन्वणं विनामर्त्यं क्रिमयो भन्नते सदा
तस्मात्सर्व प्रयत्नेन शिवलिङ्गार्चनं कुरु २३
प्रथमन्तनुशुद्धिः स्यात् द्वितीयं स्थानशुद्धिकम्
तृतीयं द्रव्यशुद्धिश्च चतुर्थं मन्त्रशोधनम् २४
पञ्चमं लिङ्गशुद्धिः स्यादित्येते पञ्चशुद्धयः
पूर्वोक्तविधिमार्गेण देहशुद्धिं समाचरेत् २५
देहन्यास क्रमेणैव देहशुद्धिं समाचरेत्
भूमिं समतलं कृत्वा सुखासीन उदङ्मुखः २६
रेचकं पूरकं चैव कुम्भकन्दशमात्रकम्
दशदिन्वस्त्रमन्त्रेण दिग्विरेचनमाचरेत् २७
शङ्खतोयस्य तन्मध्ये सुरभिमुद्रां प्रदर्शयेत्
शिवमन्त्रन्नयसेद्विद्वान् गन्धपुष्पकुशैर्युतम् २८
तदम्भसा शिवनाम्ना शिरसि प्रोन्दय मन्त्रवित्
करन्यासं पुराकृत्वा सृष्टिमार्गेण बुद्धिान् २९
अङ्गुष्ठादि कनिष्ठान्तं सृष्टिन्यासमुदाहृतम्
कनिष्ठिकाद्यङ्गुष्ठकान्तं यत्संहारन्यासमुच्यते ३०
दन्निणे मध्यमादिस्याद्वामे स्यादनामिकान्तकम्
स्थितिन्यासमिदं प्रोक्तं सर्वकर्मस्वयं विधिः ३१
मूर्धादि सृष्टिरत्रोक्ता पादादिस्संहृतिर्भवेत्
ईशादिसृष्टिविन्यासं सद्यादिस्संहृतिर्भवेत् ३२
अघोरादि स्थितिन्यासं इत्येवं मन्त्रकं न्यसेत्
हृदयं हृदये न्यस्य शिरश्शिरसि विन्यसेत् ३३
शिखा शिखायां विन्यस्य कवचं स्तनमध्यतः
अस्त्रं हस्ते तु विन्यस्य नेत्रन्नेत्रेषु विन्यसेत् ३४
जान्वोर्नाभि गळे चैव ललाटे मूर्धदेशके
पृथिव्यादीनि बीजानि लवरयहकारकाः ३५

पीतं शुक्लं तथा रक्तं कृष्णाभं धूम्रवर्णकम्
चतुरश्रार्धचन्द्रं च त्रिकोणं च षडश्रकम् ३६
सुवृत्तं च पृथिव्यादि मण्डलाकृतयः क्रमात्
ततस्सप्तशतन्देवम् शिवं प्रणवसंस्थितम् ३७
त्रिकोणमग्निदेवं च वृत्तं च चन्द्रसूर्ययोः
मण्डलाकारमेवोक्तं अग्निसूर्यशशाङ्कयोः ३८
हृदयं शिरश्शिखा कवच अस्त्रनेत्रमिति स्मृतम्
पृथिव्यादीनि बीजानि योजयेत्तु विशेषतः ३९
पृथिव्यादीनि तत्वानां ब्रह्माद्याः पञ्चमूर्तयः
पञ्चोद्धातश्चतस्त्रश्च त्रयश्च द्वयमेकशः ४०
ह्लां ह्लीं ह्रूं ह्लैं ह्लौं कारं च क्रमेणैव च शोधयेत्
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च ४१
पृथिव्यादीनि भूतानि हुं फट्संयुक्तबुद्धिमान्
जानुनाभिगळे चैव ललाटे मूर्धदेशके ४२
हृदयादीनि मन्त्राणि बन्धयेदादिशैवकः
तद्बन्धं पञ्चग्रन्धि स्यादिति शास्त्रस्य निश्चयः ४३
पाशुपतेन चास्त्रेण पञ्चग्रन्धींस्तु छेदयेत्
हृदयादीनि मन्त्राणि पृथिव्यादिषु योजयेत् ४४
शिखाग्रे द्वादशाङ्गुळ्ये हंसेनात्मनि योजयेत्
संहारमुद्रया चैव शिवतत्वे नियोजयेत् ४५
आग्निमण्डलमध्ये तु अग्निबीजन्नयसेद्बुधः
कळेबरन्दहेत्पश्चाद्दग्धरज्जुं विचिन्तयेत् ४६
आपूर्य --- न्ततो ध्यात्वा आत्मानममृतेन च
प्रणवं श्वेतकमलं योगपीठमधोमुखम् ४७
स्त्रवन्तममृतं ध्यात्वा वृषमण्डलमध्यमे
तेन प्लावितपिण्डन्तु शरीरस्थितिकं कुरु ४८

अात्मानमानयेत्तत्र पूर्ववत्कारयेत्सुधीः
अकारादिक्षकारान्तं वर्णमन्त्रैः क्रमान्न्यसेत् ४९
अकारमूर्ध्नि विन्यस्य आकारन्तु ललाटके
इ ईदन्त द्वये चैव उ ऊ ओष्ठद्वयेऽपि च ५०
ऋ ॠ चक्षुद्वये चैव लृ ॡ नासिद्वये न्यसेत्
ए ऐ श्रोत्रद्वये चैव ओ औ जुह्वागळे विदुः ५१
अं अः कर्णद्वये चैव अक्षरं विन्यसेत्सुधीः
कवर्गन्दक्षिणे पार्श्वे चवर्गं वामपार्श्वके ५२
टवर्गन्दक्षिणे पादे तवर्गं वामपादके
पवर्गन्दक्षिणे हस्ते यवर्गं वामहस्तके ५३
ळं क्षं लिङ्गमपाने च वर्णस्थानं विधीयते
कलाशक्तिकलान्यासं क्रमेणैव तु योजयेत् ५४
पञ्चब्रह्मषडङ्गानि तत्तद्देशेषु विन्यसेत्
मूर्धादि पादपर्यन्तं दशाक्षराणि विन्यसेत् ५५
प्रासादं विन्यसेत्पश्चाच्छिवोहमिति भावयेत्
करार्चनां पुरः कृत्वा पश्चाद्देहार्चनां कुरु ५६
पूर्ववद्देह न्यासं च यथाक्रमेण योजयेत्
एवं कृत्वा विशेषेण आत्मशुद्धिं समाचरेत् ५७
त्रिकालं द्वेककालं वा आत्मार्थं संप्रपूजयेत्
नाभिमूलादधः पद्मं तुर्याङ्गुळिप्रमाणतः ५८
मूलाधारमिदं प्रोक्तं शङ्खनाभि ध्वनिं विदुः
बिन्द्वन्तन्नादमन्तं च नादान्तं च शिवं विदुः ५९
बिन्दुनादसमायुक्तं शक्तिरित्यभिधीयते
अग्निमध्ये रवैस्थानं रविमध्ये तु चन्द्रमाः ६०
तस्य मध्ये तु सर्वज्ञो व्यक्ताव्यक्तमिति स्मृतम्
आत्मानं चान्तरात्मानं परमात्मानमुच्यते ६१

क्रमेणैवोर्ध्वतस्सर्वं सात्विकादिगुणैर्युतम्
भ्रूमध्ये संस्थितं देवं नाभिमध्ये प्रतिष्ठितम् ६२
हृदये यजनं कुर्यान्नाभौ होमं प्रकल्पयेत्
हृत्पद्मे चार्चयेन्नित्यं द्विकालं वा त्रिकालकम् ६३
अथवा एककालन्तु संयजेन्मानसेन तु
अङ्कुरान्नाभिमूले तु हृदये सुप्रतिष्ठितम् ६४
मनोन्मन्यास्तु संयोगं भ्रूमध्ये तु विशेषतः
चतुरष्टद्विरष्टौ च द्वात्रिंशद्द्विगुणीकृतम् ६५
षडाधारं तु पद्मं स्यादूर्ध्वाधः क्रमयोगतः
त्रिधाधारमथो भागे कुण्डलो नाहवृत्तके ६६
नवाधारमिदं प्रोक्तं सर्वव्यापी सदाशिवः
घण्टाजिह्वयोस्संयोस्तदुत्पत्तिरिव कथ्यते ६७
एवमेव प्रकारेण चिन्तयेदादिशैवकः
आत्मशुद्धिरियं प्रोक्ता स्थानशुद्धिमतः श्रुणु ६८
मार्जनालेपनं चैव वितानध्वजभूषितम्
शोधनीमुद्रयाचैव फट्कारेण तु शोधयेत् ६९
शिवांभसा तु संस्नाप्य प्रासादाभ्यन्तरे बहिः
हस्तमात्रप्रमाणेन मण्डलं चतुरश्रकम् ७०
आवाहयेत्ततो भूमिं सर्वाभरणसंयुताम्
द्विनेत्रां चतुर्भुजां चैव पुष्पहस्तां तु पिङ्गळाम् ७१
गन्धं तैल तथाभ्यङ्गगव्यं चामृतकन्तथा
कषायं गन्धोदकं चैव प्रोक्तवस्त्रन्तथैव च ७२
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च धूपकम्
दीपञ्चैव हविश्चैव उपदंशं तथैव च ७३
ताम्बूलं मुखवासञ्च नीराजनं च दर्पणम्
चामरं तालवृन्तं च छत्रं पादुकमेव च ७४

सौवर्णं राजतं ताम्रं कांस्य पात्रं च शोधयेत्
शङ्खपात्रादि पात्राणां जलद्रोणी वर्धन्यादिकम् ७५
त्रिपाद्यादीनि सर्वाणि शोधयेन्मूलमन्त्रतः
तत्तद्द्रव्याणि पात्राणि क्षाळयेत्तु विशेषतः ७६
शोधितान्क्षाळितां चैव सादराद्द्रव्यपात्रकान्
शिवीकृतेन तोयेन प्रोक्षयेन्मूलविद्यया ७७
द्रव्यशुद्धिर्भवेदेवं लिङ्गशुद्धिमतः श्रुणु
कनिष्ठिका नामिका मध्ये पुष्पं गृह्यविचक्षणः ७८
पूर्वसन्ध्यर्चितं पुष्पं अङ्गुष्ठेन विसर्जयेत्
विसर्जने तु तत्काले पुष्पमूर्ध्नि निधापयेत् ७९
देहन्यासक्रमं कृत्वा मन्त्रदेहस्सदाशिवः
अव्यक्तानान्तु लिङ्गानां व्यक्तमेतत्सुचिन्तयेत् ८०
तस्मिल्लिंगे वसेद्देवो व्यक्ताव्यक्तस्सदाशिवः
सन्ध्या काले तु सुव्यक्तमव्यक्तं चान्यकालके ८१
आवाहनविसर्गाभ्यां सम्मुखो विमुखोऽपि च
काष्ठेन मर्दयेत्काष्ठं तत्क्रियान्तेग्निसम्भवम् ८२
तावत्सर्वेश्वरे जातं सर्वव्यापि शिवात्कृतः
स्वभावतश्शिवः प्रोक्तः काष्ठमध्ये तु अग्निवत् ८३
उपकाष्ठन्तु मर्दित्वा यावदग्निस्तु जायते
तावत्सदाशिवं प्रोक्तं शिवलीला प्रवर्तते ८४
ज्ञानयोगक्रियाचर्यम् सदाशिवं तु बन्धयेत्
तं शिवं पूज्यकाले तु क्रिययोद्धृत्य चाग्निवत् ८५
स्वभावमध्यगं प्रोक्तं क्रियाकाले तु व्यक्तकम्
कुम्भाकृति शिराकारं आमलस्याकृतिर्वपुः ८६
कूश्माण्डफलवद्रूपं पनसफलरूपकम्
तालफलवदाकारं आर्षकं लिङ्गमुच्यते ८७

बिंबञ्च नाळिकेरं च बिल्वं चैव कपित्थकम्
चूतं च मातुलुङ्गं च कदम्बफलमल्लिका ८८
इत्येतैर्लक्षणैर्युक्तं गाणपं लिङ्गमुच्यते
यथेष्टाकृतिसंयुक्तं स्वयंभुलिङ्गमुच्यते ८९
स्वायंभ्वार्षदेवानां त्रिसूत्रं मुकुळैर्विना
त्रिसूत्रमुकुळैर्युक्तं गाणपं लिङ्गमुच्यते ९०
आवाहनोद्वासनन्नास्ति स्वायम्भ्वार्षक गाणपे
आवाहनोद्वासनैर्युक्तं मानुषं लिङ्गमुच्यते ९१
लिङ्गायामत्रिभागेकं पृष्ठभागमथोचितम्
मध्यमे विष्णुभागं स्यात्तदूर्ध्वशिवभागकम् ९२
शिवभागन्तु तिथ्यंशं पादमेकांशमुच्यते
द्वितीयं जङ्घभागं च तृतीयम्मूरुमेव च ९३
चतुर्थं कटिदेशं च पञ्चमं कटिरूर्ध्वतः
षट्भागन्नाभिदेशं च सप्तमम्मुदरं विदुः ९४
अष्टमं हृदयं प्रोक्तं नवमं स्तनमध्यतः
दशमं कण्ठदेशं स्यात् चिबुकमेकादश स्मृतम् ९५
---------------------------
चतुर्दशं ललाटं स्यात्पञ्चादशं सुमूर्तिषु ९६
मूर्धादि पादपर्यन्तं अष्टत्रिंशत्कलान्यसेत्
शशिर्नां मूर्ध्व मूर्ध्निस्तु अङ्गदां पूर्वमूर्धनि ९७
इष्टान्दक्षिणमूर्ध्नि वै मरीचिञ्चोत्तरे न्यसेत्
ज्वालिनीं पश्चिमे मूर्ध्नि प्रणवेनोर्ध्ववक्त्रकम् ९८
अव्यक्तकला इति ख्यातम् ऊर्ध्ववक्त्रमिति स्मृतम्
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च ९९
पूर्वे च पश्चिमे याम्ये सौम्ये चैव क्रमेण तु
यथाक्रमेण विन्यस्य पञ्चवक्त्रेकभागतम् १००

तमो धराक्षयानिष्ठा धृतिः क्षान्तिस्स्मृतिक्षमा
अघोरस्य कलानान्तु अष्टौ वै शक्तयः क्रमात्  १०१
हृदये कण्ठदेशे तु अंसयोरुदरेपि च
नाभौ पृष्ठोरसोश्चैव अघोरस्य कलान्यसेत्  १०२
रजो रक्षा रतिः पाल्या कामा यंयमिनी क्रिया
तृष्णामेधा क्षुधा पीता ग्रामणीर्भामणी तथा  १०३
वामदेव कलानान्तु शक्तयस्स्युस्त्रयोदश
गुह्ये गुदे च ऊर्वोश्च जान्वोर्जङ्घाद्वयेऽपि च  १०४
पृष्ठे कट्यां पार्श्वयोश्च वामदेव कलान्यसेत्
सिद्धिरिद्धिद्युतिलक्ष्मीर्मेधा कान्तिस्वधा प्रजा  १०५
सद्यमन्त्रकलाश्चाष्टौ दिव्यदेहे तु कल्पयेत्
पादयोरुभयोश्चैव हस्तयोरुभयोस्तथा  १०६
बाह्वोर्नास्योश्शिरस्येव सद्योजातकलान्नयसेत्
गौरी कलास्त्वहं वक्ष्ये गौरीबीजसमुद्भवम्  १०७
तारा ईशकलाज्ञेया विद्यावक्त्रकला भवेत्
मृत्युश्श्रद्धा जरा मेधा स्वधास्वस्ति च वर्मणा  १०८
पालिनी ज्वालिनी प्राणा धृतिः कामा मतिः प्रजा
शान्ता भूतिः क्रिया क्षान्तिः घोरवामकला भवेत्  १०९
शान्तिर्दान्तिर्दया सूतिद्युतिस्सन्ध्यास्तु सद्यगाः
षड्विंशति कलाह्येता गौरी देहे तु विन्यसेत्  ११०
मूर्ध्नि वक्त्रे तारविद्ये अन्यत्सर्वं क्रमान्नयसेत्
हृदये च गळे बाह्वोर्जठरे नाभिदेशके  १११
अघोरस्य कलान्यासं योनिगुह्यप्रदेशयोः
ऊर्वोर्जानुद्वये चैव पृष्ठे द्वयोश्च पार्श्वयोः  ११२
वामदेवकलाह्येता देहे तु विन्यसेत्
पादयोरुभयोश्चैव हस्तयोरुभयोरपि  ११३

स्तनयोरुभयोश्चैव सद्योजातकलान्न्यसेत्
अकारादिक्षकारान्तं विन्यसेत्तु विशेषतः ११४
शिरो ललाटनेत्रेषु कर्णयोश्चैव गण्डयोः
नास्यो रोष्ठद्वये चैव दन्तपङ्क्तिद्वयेपि च ११५
जिह्वायां तालु रन्ध्रे च स्वरान्षोडश विन्यसेत्
कवर्गन्दक्षिणे हस्ते चवर्गं वामहस्तके ११६
टवर्गन्दक्षिणे पादे तवर्गं वामपादके
पफौ च दक्षिणे पार्श्वे बभौ च वामपार्श्वके ११७
मकारं कण्ठदेशे तु क्रमेण परिपठ्यते
यकारादि सकारान्तं रसास्त्रं मांसमेदजम् ११८
अस्थि मज्ञाश्च शुक्लं च क्रमेणैव तु विन्यसेत्
हकारं हृदये न्यस्य ळकारं वृषणे न्यसेत् ११९
क्षकारं मेढ्रदेशे तु विन्यसेत्तु विशेषतः
षडध्वा अङ्गसंपूर्णं दिव्यदेहमिति स्मृतम् १२०
पृथिव्यापस्तथा तेजो वायुराकाशमेव च
श्रोत्रत्वक्चक्षुजिह्वा च घ्राणं चैव तु पञ्चमम् १२१
वाक्पदिपाणिपायू उपस्थञ्चैव तु पञ्चमम्
शब्दं स्पर्शं च रूपं च रसं गन्धं च पञ्चमम् १२२
मनो बुद्धिरहंकारः प्रकृतिः पुरुषस्तथा
रागो माया च विद्या च कालो नियतिरेव च १२३
विग्रहेश्वरसकळं शुद्धमाया तथैव च
शुद्धविद्या शुद्धकला सदाशिवमिति स्मृतम् १२४
षट्त्रिंशत्तत्वमेवोक्तं तत्तत्वं प्राणमुच्यते
कलाध्वात्वंगमित्युक्तं तत्वाध्वा प्राणमुच्यते १२५
वर्णाध्वा च त्वचोपेता मन्त्राध्वारुधिरान्विता
भुवनाध्वा रोमरूपं च पदाध्वासिरमेव च १२६

ततस्सप्तदशन्देवम् शिवं प्रणवसंस्थितम्
पूर्ववत्सकलीकृत्य शिवमावाहयेत्ततः १२७
कपालीशस्त्वजो बुद्धो वज्रदेहः प्रमर्दनः
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः १२८
इत्येषां पूर्वदिक्भागे दशदेवाः प्रकीर्तिताः
हुताशनश्च पिङ्गश्च खादको हर एव च १२९
ज्वलनो दहनो बभ्रुर्भस्मान्तकः क्षयान्तकः
इत्येषां अग्निदिक्भागे दशदेवाः प्रकीर्तिताः १३०
याम्यो मृत्युर्हरो धाता विधाता कर्तृरेव च
संयोक्ता च वियोक्ता च धर्मश्च पतिरेव च १३१
इत्येषां याम्यदिक्भागे दशदेवाः प्रकीर्तिताः
निर्ऋतिर्वरुणो हन्ता क्रूरदृष्टिर्भयानकः १३२
ऊर्ध्वकेशो विरूपाक्षो धूम्रो लोहितदंष्ट्रवान्
इति नैर्ऋतिदिक्भागे दशदेवाः प्रकीर्तिताः १३३
अतिबलो पाशहस्तर्महाबलश्वेत एव च
जयभद्रो दीर्घबाहुर्जलान्तको मेखनादकः १३४
सुनादश्च इति ख्याता वारुणे दिशि देवताः
शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षयान्तकः १३५
पञ्चान्तकः पञ्चशिखः कपर्दीमेघवाहनः
इति वायव्य दिक्भागे दशदेवाः प्रकीर्तिताः १३६
निधीशो रूपवान्धन्यो सौम्यदेहो जटाधरः
लक्ष्मीधरो रक्तधरः श्रीधरश्च प्रसादकः १३७
प्रकामदश्च इत्येषां उत्तरे च प्रकीर्तिताः
विद्याधिपश्च ईशश्च त्रिदशस्सर्व एव च १३८
ज्ञानभुग्वेदपारश्च सुरेशश्शर्व एव च
ज्येष्ठश्च भूतपालश्च बलिप्रियश्च एव च १३९

ईशान्यदेवदिक्भागे दशदेवाः प्रकीर्तिताः
वृषो वृषधरश्चैव अनन्तः क्रोध एव च १४०
मारुतो ग्रसनश्चैव उदुम्बरीश एव च
फणीन्द्रो वज्रदंष्ट्री च इत्यधो दिशि देवताः १४१
शम्भुर्विभुर्गणाध्यक्षः त्र्यक्षश्च त्रिदशेश्वरः
संवाहश्च विवाहश्च नभो लिप्सुस्त्रिलोचनः १४२
इत्यूर्ध्वे दिशि देवाश्च दशदेवाः प्रकीर्तिताः
तदुपरि वीरभद्र भद्रकाळि द्वयन्नयसेत् १४३
ब्रह्मविष्णुश्च रुद्रश्च दिशि देवाः प्रकीर्तिताः
ब्रह्माण्डमध्ये भुवनानि शतरुद्राः प्रकीर्तिताः १४४
निवृत्तिकलायां चैव पृथिवी तत्वमुच्यते
क्षकारो वर्ण इत्येषां भुवनमष्टाधिकं शतम् १४५
नमो नमश्शिवाय ओं सर्वद शर्व शिव सूक्ष्म सूक्ष्म
शब्द शब्द ज्ञान ज्ञान पिङ्ग पिङ्ग पतङ्ग पतङ्गं तुरु तुरु १४६
साक्षिन्साक्षिन् पूर्वस्थित असंस्तुता संस्तुत
अनर्चितानर्चित ब्रह्मविष्णुरुद्रपर सर्वसान्निध्यकर १४७
सर्वभूतसुखप्रद भवोद्भव भव भव शर्वशर्व
प्रथम प्रथम मुञ्च मुञ्च योगाधिपतये महातेज १४८
सद्भावेश्वर महादेव इति
व्योमव्यापि महामन्त्रमष्टाविंशत्पदं भवेत् १४९
निवृत्तिकला व्याप्तिश्च षड्विधाध्वमिति स्मृतम्
प्रतिष्ठा कलां वक्ष्ये आपाग्निर्वायुव्योमकम् १५०
गन्धं रसं रूपस्पर्शं शब्दन्तन्मात्रपञ्चकम्
वाक्पाणिपादपयूपस्थम् कर्मेन्द्रियम्मतम् १५१
श्रोत्रत्त्वक्चक्षुजिह्वाघ्राणं बुद्धीन्द्रियं मतम्
मनोबुद्धिरहंकारं अन्तःकरणकं स्मृतम् १५२

गुणाः प्रकृतिरित्युक्त चतुर्विंशन्तत्वमेव च
गकारादि हकारान्त वर्णास्त्रयो विंशतिः १५३
शिरो वाममन्त्रेण मन्त्रद्वयमिहोच्यते
षट्पञ्चाशद्भुवनानां यथाक्रममिति स्मृतम् १५४
अमरेशः प्रभासश्च नैमीशो पुष्करस्मृतः
आषाढी डिण्डिमुण्डी च भारभूतिर्लकुळीश्वरः १५५
इत्यष्टकतत्वानां पदन्तत्वमिति स्मृतम्
हरिश्चन्द्रश्च श्रीशैलो जल्पेशोंम्रादिकेश्वरः १५६
मध्यमेशो महाकाळो केदारो भैरवेश्वरः
इत्यष्टकसंज्ञायामग्नितत्वे प्रकीर्तिताः १५७
गया चैव कुरुक्षेत्रो नाखलो नखलस्तथा
विमलेशोदृहासश्च महेन्द्रो भीमकेश्वरः १५८
इत्येषामष्टभुवनम् वायुतत्वे प्रकीर्तितम्
वस्त्रपादो रुद्रकोटि अविमुक्तो महाबलः १५९
गोकर्णो भद्रकर्णश्च स्वर्णाक्षो स्थाणुकेश्वरः
इत्येषामष्टभुवनं व्योमतत्वे प्रकीर्तितम् १६०
छगरण्डो द्विरण्डश्च माकोटो मण्डलेश्वरः
काळाञ्जनश्शङ्कुकर्णो मूलेश्वर इति स्मृतः १६१
इत्येषामष्टभुवनं अहङ्कारे स्थितं भवेत्
पैशाचं राक्षसं यक्षं गान्धर्वमैन्द्रमैव च १६२
सौम्यं प्रजेशं ब्राह्मं च इत्यष्टौ बुद्धिके स्थितम्
अकृतं च कृतं चैव भैरवं ब्राह्मवैष्णवम् १६३
कौमारमौमकं चैव श्रीकण्ठमिति कथ्यते
याष्टकं प्रकर्तव्यं गुणप्रकृतिरुच्यते १६४
एवं भुवनसप्ताष्टकानि एकविंशत्पदं स्मृतम्
महेश्वर परमात्मन्शर्व शिवविधनोद्भवनिधन १६५

अनिधन ओंभुवः धू धू धू ना ना ना अनादे
अभस्म अधूम अनग्ने अरूप ज्योतिर्ज्योति १६६
तेजस्तेज प्रथम प्रथम प्रथम अरूपिन्नरूपिन्
महेश्वर पदमारभ्य अरूपिन्नरूपिन्नित्यन्तम्
-------- प्रतिष्ठाकलायां व्याप्तं सञ्चिन्तयेदिति
षड्विधाध्व व्याप्तिर्विद्याकलायां पुनः १६७
पुरुषरागविद्याकलानियति मायान्ततत्वानि
सप्तवर्णाः घकारादि ञकारान्ताः मन्त्राणि अघोरशिखा १६८
भुवनानि सप्तविंशतिः । वाम भीम उग्र भव ईश इति एक ।
विंशति पुरुष । प्रचण्ड उमापति अज अनन्त एक वीर १६९
इति भुवन पञ्चकम् रागे क्रोध चण्डेशौ विद्यायाम्
ज्योतिस्संवर्तौ कलायां सूकरखादकौ नियत्याम् १७०
एकवीरै शिखेदौ काले महातेजवामदेवौ
भवश्चोद्भव एकपिङ्गळ एके क्षण ईशान १७१
अङ्गुष्ठमात्र इति मण्डलेश्वराष्टकं मायायाम्
एवं भुवनानि वेददेवतानि तत्वानि पदानि विंशतिः १७२
व्यापिन्व्यापिन् व्योमिन्व्योमिन् अचेतनाचेतन
परमेश्वरपराय ज्योतीरूपाय सर्वयोगाधिकृताय १७३
अनिधनाय गोप्त्रे गुह्याति गुह्याय ओं नमो नमः
सद्योजातमूर्तये वामदेव गुह्याय अघोरहृदयाय १७४
तत्पुरुषवक्त्राय ईशानमूर्धाय शिवाय सर्वप्रभवे
शिवाय ओन्नमः ध्यानाहाराय इति व्यापिन्यादिध्याना १७५
हारान्तानि एवं पञ्चविधमध्वानं कलाव्याप्तम्
सञ्चिन्तनीयमिति षड्विधाध्व व्याप्तः शान्तिकलायां पुनः १७६
शुद्धविद्या चेश्वर सदाशिवाख्यं तत्वत्रयम् वर्णास्त्रयः
गखकाः मन्त्रे तत्पुरुषकवचे भुवनान्यष्टादश १७७

वामाज्येष्ठा रौद्री काळी कलविकरणी बलविकरणी
बलप्रमथनी सर्वभूतदमनी मनोन्मनीति भुवनकम् १७८
शुद्धविद्यायाम् ------------------
अनन्तेशस्तथा सूक्ष्मश्शिवोत्तमश्चैक नेत्रकः १७९
भुवनाष्टकमीश्वर तत्वे सादाख्ये सदाशिवभुवनम्
पादान्येकादश नित्यं योगिने योगपीठसंस्थिताय १८०
ध्रुवाय अनाश्रिताय अनाथाय शिवाय सर्वव्यापिने
व्योमरूपाय व्योमव्यापिने नित्यं योगिने इत्यादि १८१
व्योमव्यापिन्नन्तानि पदानि एवं पञ्चविधमध्वानम्
षड्विधया शान्तिकलया व्याप्तं सञ्चिन्तयेदिति षड्विधाध्वव्याप्तिः
१८२
शान्त्यतीत कलायां पुनः शिवतत्वं वर्णाष्षोडश स्वराः
विसर्गाद्या अकारान्ताः शिवेशानमस्त्रं मन्त्रत्रयम् १८३
भुवनानि सप्त पञ्चादश निवृत्तिश्च प्रतिष्ठा च विद्याशान्ति
शान्त्यतीतायां बिन्दुकला भुवनानि इन्धिकादीपिकास्तथैव च
१८५
रोचिका मोचिका ऊर्ध्व गामिनीति नादकलाभुवनानि
व्यापिनी व्योमरूपा अनन्ता अनाथा अनाश्रिता इति १८६
शक्तिकलाभुवनानि व्योमव्यापि मन्त्राद्योंकार पदमित्येव मध्व
पञ्चकम् शान्त्यतीत कलायाम् व्याप्तं विभावयेत् इति १८७
षड्विधाध्व व्याप्तिः एवमेवात्र षडध्वव्याप्तिर्व्याख्याता ।
तत्रकला पञ्चतत्वानि षट्त्रिंशत् वर्णाः पञ्चाशत् मन्त्रान्येकादश
भुवनानि चतुर्विंशत्यधिकशतद्वयं पदान्येकाशीतिः । एवम् ।
१८८
षडध्वज्ञान सम्पन्नो मुच्यते पाशबन्धनात् । एवम् १८९
षडध्वाङ्गसम्पूर्णं सदाशिवमनुस्मरन्

कुलाध्वात्वङ्गसम्पूर्णं भुवनाध्वा रोमरूपधृक् १९०
वर्णाध्वसुत्वचोपेतं मन्त्राध्वरुधिरान्वितम्
पदाध्वान्त सिरामांसं शुक्लमज्ञास्थितत्वगम् १९१
सदाशिवष्षडध्वात्मा तस्य प्राणश्शिवस्मृतः
हृदयाद्यङ्गसम्पूर्णो ध्याने सकळरूपधृक् १९२
कुन्देन्दुस्फटिकाभासं जटामकुटमरिडतम्
पञ्चमूर्धं पञ्चवक्त्रं नेत्रपञ्चदशैर्युतम् १९३
सर्वाभरणसंयुक्तं दशदोर्भिस्समन्वितम्
शूलं च परशुं खड्गं वज्राभयं च दक्षिणे १९४
पाशन्नागांकुशं चैव घराटां वह्निं च वामके
सद्यञ्चक्षीरसदृशं वामं रत्ननिभं भवेत् १९५
अघोरमञ्जनप्रख्यं पुरुषं कुंकुमप्रभम्
शुद्धस्फटिकवर्णाभं ईशानमुखमुच्यते १९६
ईशानं कनकं वर्णं मुखवर्णमिति स्मृतम्
दिव्याम्बरधरन्देवं दिव्यपुष्पैरलङ्कृतम् १९७
दिव्यगन्धानुलिप्ताङ्गं शान्तरूपं स्मिताननम्
स्थितमासीनशयनम् लिङ्गाकृतिविशान्नयेत् १९८
वर्धमानं स्थितं लिङ्गं आसीनन्तं शिवाधिकम्
त्रैराशिकं च शयनम् समखराडं त्रिकर्मभाक् १९९
चतुर्विंशदंशकृतं लिङ्गमधो ब्रह्मभागं भवेध्वातु ।
रंशकम् । पुनर्मध्यमे विष्णुभागं वसुञ्च नवांशम् २००
शिवांशं भवेद्वर्धमानं । समभागं ब्रह्मविष्णवीशं
शिवभागाधिकन्तथा
शिवाधिकमिति प्रोक्तं समखराडं समं भवेत् २०१
एकत्रिंशति भागे तु शैवं ब्राह्मणवैष्णवम्
रुद्राद्रुद्रमिति प्रोक्तं त्रैराशिकमिति स्मृतम् २०२

स्वायंभुवादिलिङ्गानां समाकारं स्थितं भवेत्
स्थूलमूलं कुशाग्रन्तु आसीनन्तु प्रचक्ष्महे  २०३
कुशमूलन्तु स्थूलाग्रं शयनमिति पठ्यते
त्रिकर्मभाक्स्थूलं स्याल्लिङ्गानामाकृति स्मृतम्  २०४
पीठे शक्तिं समावाह्य तद्रूपमिति कथ्यते
उपानं पादमेवं स्याज्जगती जङ्घमुच्यते  २०५
कुमुदं कुक्षिरित्याहुर्बाहुभ्यां फुल्लमेव च
कण्ठं कण्ठमिति प्रोक्तम् अधरमधरपट्टिका  २०६
महापट्टिमुखं प्रोक्तं घृतवारि शिरस्तथा
मन्त्रोच्चारे स्मरेन्मन्त्री द्विनेत्रां द्विभुजान्विताम्  २०७
रक्तवर्णान्त्रिभङ्गाङ्गीञ्चित्तवस्त्रेण वेष्टिताम्
सर्वाभरणसम्पूर्णां पीनोरुजघनस्तनाम्  २०८
नूपुरैः पादजालैश्च उदरबन्धसम्युताम्
सुमुखां गन्धपुष्पाढ्यां केशालकविभूषिताम्  २०९
पद्मोत्पल धरां देवीं वरदाभयपाणिनीम्
एवं ध्यात्वा सुपीठे तु गौरीदेहं विचिन्तयेत्  २१०
षड्विंशतिकलाह्येता गौरीदेहे तु विन्यसेत्
अकारादिक्षकारान्त पूर्ववद्विन्यसेत्क्रमात्  २११
वृत्तपीठे स्थितागौरी आसीनां भद्रपीठके
शयानां पद्मपीठे स्यादन्येषु च चराचरा  २१२
एवं ध्यात्वा तु मन्त्रज्ञो सर्वपीठं विशेषतः
अग्नौ वा निर्ऋतौ वापि स्थित्वा देवं प्रपूजयेत्  २१३
हस्ताद्धीनं तु लिङ्गानां सुखासीनस्सुपूजयेत्
आधारं स्वाधिष्ठानं च मणिपूरमनाहतम्  २१४
विशुद्धिराज्ञा स्थितं स्थानमित्येताधारशक्तयः
आधारं गुदमित्युक्तं स्वाधिष्ठानं तु लिङ्गकम्  २१५

मणिपूरन्नाभिमध्यं हृदयन्त्वनाहतन्तथा
कण्ठदेशं विशुद्धिश्च आज्ञा ------ २१६
आधारमासनं प्रोक्तं आधेयः परमश्शिवः
नादं लिङ्गमिति प्रोक्तं बिन्दुः पीठमिति स्मृतम् २१७
न शिवेन विना शक्तिर्न शक्तया रहितश्शिवः
पुष्पेषु गन्धवद्ज्ञेयं तिलेषु तैलवत्तथा २१८
देहे च प्राणवच्छक्तिस्तस्माद्युक्तं प्रपूजयेत्
शिवशक्त्योश्च संयोगादन्यरूपं समुत्भवम् २१९
आदिशक्तिर्यथारूपं तद्रूपं च मनोन्मनी
मनोन्मन्या शिवसंयोगं सदाशिवगौर्युत्भवम् २२०
सदाशिवगौरीसंयोगान्महेशो भवानि चोत्भवम्
महेशनाम इत्याहुर्नृत्तमूर्तिरिति स्मृतम् २२१
महेश भवानि संयोगादुमारुद्रसमुद्भवम्
उमारुद्रस्य संयोगाद्विष्णुश्रीभूमिचोद्भवम् २२२
हस्ताधिकप्रमाणे तु स्थित्वा देवं प्रपूजयेत्
विष्णुश्रीभूमिसंयोगाद्ब्रह्मागीश्च सावित्रिकम् २२३
ब्रह्मासरस्वती योगाददित्यज समुद्भवम्
ब्रह्मासावित्रिसंयोगादिति वेदसमुद्भवम् २२४
आदित्यजसम्मूर्गां दादित्यादि समुद्भवम्
द्वादशादित्यवसवो एकादश गुणाश्विनौ २२५
त्रयत्रिंशद्देवताह्येते स्वर्गलोकनिवासिनः
दितिधातासंयोगादैत्यराक्षसयोर्भवम् २२६
आदित्यात्संसृता कालो उषादेवी समुत्भवम्
आदित्योषससंयोगान्मृगपक्षिस्त्वजायत २२७
मृगपक्ष्योस्सुसंयोगात्पक्षिजातिस्तु संसृता
रक्षो यक्षसुसंयोगात्सर्वा अमृतिसंसृता २२८

सर्पो अमृति संयोगात्सरीसृपवृषसम्भवम्
सरीसृपवृषसंयोगाद्वृक्षाणां सम्भवस्मृता  २२९
एवन्नरो मृगश्चैव पशुपक्षिसरीसृपम्
वृक्षाणामेव सर्वेषां यथाक्रमेण संस्मृता  २३०
महदव्यक्तसङ्काशमव्यक्तादाकाशकं स्मृतम्
आकाशाद्वायुस्सञ्जातः वायोरग्निस्तु सम्भवः  २३१
अग्नेरापस्समुद्भूताश्द्भ्यः पृथिवी च संसृता
पृथिव्यप्तेजवाय्वाकाशसमवायं प्राणतो स्थितम्  २३२
तस्य प्राणस्य विभिन्न घटाकाशवदीरितम्
घटच्छेदस्य काले तु आकाशात्प्राणतो स्थितम्  २३३
सर्वप्राणिस्तु जननं सर्वप्राणिलयन्तथा
आकाशवल्लिङ्गमित्याहुर्वायुना लिङ्गमुच्यते  २३४
लिशब्दात्प्रापणो दर्शं गंशब्दाद्गमनं स्मृतम्
सर्वप्राणिस्तु गमनं सर्वप्राणि लयं भवेत्  २३५
लिङ्गनाममिति प्रोक्तं तल्लिङ्गं संप्रपूजयेत्
सदागर्भाकारगृहे पूजयेत्तु सदाशिवम्  २३६
तत्वानामादितत्वन्तु शिवतत्त्वमिति स्मृतम्
द्वितीयं शक्तितत्वं तु तृतीयं सादाख्यकं स्मृतम्  २३७
चतुर्थमीशतत्वं तु पञ्चमं शुद्धविद्यका
शुद्धतत्वमिति प्रोक्तं शिवतत्वादिपञ्चकम्  २३८
इच्छाज्ञानक्रियाशक्तिश्शिवलीला इति स्मृतम्
ज्ञानक्रियाख्ययो शक्त्योरपकर्षोत्कर्षयोरिव  २३९
तत्सादाख्यमिति ख्यातं इच्छाशक्तेस्तु जन्यते
अल्पज्ञानं क्रियाधिक्यमीशत्तत्वमिति स्मृतम्  २४०
अल्पज्ञानं क्रियाहीनं विद्यातत्वमिति स्मृतम्
विद्यारुद्रमिति ख्यातं शुद्धतत्त्वं च पञ्चधा  २४१

मायाद्यवनिपर्यन्तन्तत्वलक्षणमुच्यते
मायायाः कालसम्भूति मायायान्वियति स्मृतः २४२
मायायां कला सम्भूतिमशुद्धतत्वमिति स्मृतम्
तत्कलारुद्रसम्भूतिं विद्यारागविनिर्गतम् २४३
रागादव्यक्तजननं अव्यक्ताद्गुणसम्भवम्
तद्गुणं त्रिविधं प्रोक्तं सात्विकादिमहागुणम् २४४
सात्विकं राजसं चैव तामसं च क्रमात्स्मृतम्
गुणाद्बुद्धिस्तु सञ्जाता बुद्धेरहंकारसंस्मृता २४५
तेजसोहङ्काराज्जननमित्यभिधीयते
ततो वैखारिकमहंकाराद्बुद्धीन्द्रियं प्रसूयते २४६
भूतादिकादहंकारात्तन्मात्रं पञ्चसम्भवम्
मनेन्द्रियादि तन्मात्रारहंकारेषु जन्यते २४७
तन्मात्रपञ्चभूतानि अहंकारेषु जन्यते
यथाजातमिदं सर्वं तथालयं प्रकीर्तितम् २४८
मायाद्यवनिपर्यन्तन्तत्वलक्षणमीरितम्
सर्वेषामपि तत्वानां शिवाज्जन्यं ततो लयम् २४९
नादबिन्दुकलाह्येते सदाशिव ----- ताः
देवचेतनावर्गं सदाशिवसमायुतम् २५०
तदेव वर्गमित्युक्तं अचेतनमिति स्मृतम्
अनन्तेशादि विद्येशाः ईशतत्वाद्विनिर्गताः २५१
मन्त्रमर्थं इदं सर्वं विद्यातत्वे तु सम्भवम्
एवमेव प्रकारेण तत्त्वामामुत्भवं स्मृतम् २५२
एवमेवं गृहीतार्थशिवलिङ्गार्चनं कुरु
अज्ञानी स्पर्शनाल्लिङ्गं सर्वदोषमिति स्मृतम् २५३
तस्मात्सर्वप्रयत्नेन ज्ञानी पूजां समाचरेत्
उदिते तु संस्पृष्टम् सर्वसम्पत्सुखावहम् २५४

अस्तमयोदितं संस्पृष्टं यथालिङ्गं प्रकीर्तितम्  २५५
अस्तमयास्तमनं स्पृष्टं सर्वदोषमिति स्मृतम्
उदितास्तमयं मन्त्रं शिवमन्त्रेण पूजयेत्  २५६
शुद्धात्मा शिवसंस्कारी अध्वमार्ग सुपूजयेत्
भगमध्ये स्थितं लिङ्गं लिङ्गमध्ये स्थितं भगम्  २५७
सदाशिवासनाल्लिङ्गं लिङ्गमासनपिण्डका
पिण्डकासनभूमिस्थन्देशिकस्थानमासनम्  २५८
एवं ध्यात्वा तु मनसा पराशक्तिस्तु जन्यते
अम्बी चैव गणाम्बी च गङ्गै गौरी उमात्मिका  २५९
ईशानस्याम्बिका चैव तत्पुरुषस्य गणांबिका
गङ्गावाममुखाशक्तिर्गौरी सद्यस्य शक्तिका  २६०
अघोरस्य उमा ज्ञेया शक्तिरित्यभिधीयते
चन्द्रार्कनाशयजनं सर्वसम्पत्सुखावहम्  २६१
सङ्क्रान्तौ विषुवे पूजा न कर्तव्या कदाचन
अर्केन्दु चरिता पूजा निष्फलन्त्विति कीर्तितम्  २६२
निर्माल्यं च विसृज्याथ लिङ्गं पीठं च वारिणा
निर्माल्यं च विसृज्याथ लिंगं पीठं च वारिणा  २६३
शोधयित्वाक्षाळयित्वा पुनः पुस्पन्निधापयेत्
लिङ्गशुद्धिरियं प्रोक्ता मन्त्रशुद्धिमतश्श्रुणु  २६४
पञ्चब्रह्मषडङ्गं च क्षुरिकां पाशुपतास्त्रकम्
व्योमव्यापिशिवाख्यं च शक्तिमन्त्रं च पाणिकम्  २६५
गायत्रीं चैव सर्वेषां श्रीसूक्तं च तथैव च
विद्येश्वरगणेशं च दिक्पालकदशायुधम्  २६६
दशाक्षरं कूटाक्षरं चैव परिवारद्वारपालकम्
श्रीसूक्तं पवमानं च पुरुषसूक्तं त्र्यम्बकम्  २६७
ब्रह्मसूक्तं विष्णुसूक्तं गौरीगायत्रिमन्त्रकम्

अरुणान्त्वरितरुद्रं च ज्येष्ठसामन्तथैव च २६८
विकर्णं जातवेदं च देवस्यत्वेति मन्त्रतः
दुर्गासूक्तमुमासूक्तं परिवारद्वारपालकम् २६९
गाणपत्यं स्कन्दमन्त्रं सूर्यमन्त्रं सरस्वती
अन्यत्सर्वेषु देवानां पूजासमुद्धरेत् २७०
आलयान्तर्गतं लिङ्गं लिङ्गस्यान्तर्गतं शिवम्
कुंभमध्ये तु संस्थाप्य किं लिङ्गे न्यासयेच्छिवम् २७१
यथा कुण्डतलञ्चाग्नि तथा विहरिणा ज्वला
प्राणप्रकृतिस्तं बन्धं लिङ्गं जङ्गमथान्यसेत् २७२
यत्र पूजाहृतो मन्त्रतन्त्रमन्त्रं समुच्चरेत्
उमास्कन्दादिदेवानां तस्य लीलान्तु भावयेत् २७३
स्थितञ्च नृत्तमूर्तिञ्च शयनं किं समर्चनम्
आचार्यं मनसा ध्यात्वा आसनं संप्रकल्पयेत् २७४
तस्य रूपेण संपूज्य तत्र मन्त्रं समुच्चरेत्
ओङ्कारादिनमोन्ताश्च -- मन्त्रान् समुद्धरेत् २७५
पञ्चशुद्धिक्रमं ज्ञात्वा पश्चादेव समुच्चरेत्
मुखमण्डलद्वारेषु द्वारपालान् समर्चयेत् २७६
कृताञ्जलिपुटास्तिष्ठन् तत्स्थले नन्दिकेश्वरम्
दक्षिणे महाकाळो पूर्वद्वारे प्रकीर्तिताः २७७
नन्दिसूचिमुखो हस्तकृताञ्जलिश्च दक्षिणम्
दण्डधारी नागधारी वामहस्तप्रकीर्तितम् २७८
हलपद्माञ्जली चैव दक्षिणे काळहस्तकम्
दण्डाधराञ्च मुद्राञ्च वामहस्तञ्च काळकम् २७९
वामपादञ्च दण्डाध्वकुञ्चितं दक्षिणस्थितम्
किञ्चित्त्रिभङ्गिगङ्गायां वामपादस्तु कुञ्जितम् २८०
कराण्डमकुटोपेतं कराळवक्त्रदंष्ट्रकम्

त्रिनेत्रं चतुर्भुजञ्चैव रौद्रभावसमन्वितम्  २८१
कटिसूत्रोदरबन्धं च यज्ञोपवीतनागभाक्
एवं लक्षणसंयुक्तं पद्मपीठोपरि स्थितम्  २८२
गन्धपुष्पादिभिः पूज्य स्वनाम्ना चैव देशिकः
नन्दीशो रक्तवर्णं स्यात्काळकं रक्तवर्णकम्  २८३
सर्वाभरणसंयुक्तं उग्ररूपं च ध्यानकम्
तस्य रूपेण सम्पूज्य तत्र मन्त्रं समुच्चरेत्  २८४
अथवान्यप्रकारेण हस्तरूपं च वक्ष्यते
नन्दिनं श्यामवर्णन्तु द्विहस्तं परशुसम्युतम्  २८४
परशुं वामहस्ते तु दक्षिणे वेणुकीलकम्
नन्दीशं कुङ्कमाभन्तु परशुं वेणुदण्डकम्  २८५
द्विनेत्रौ द्विभुजौ चैव नन्दिकाळावथो पुनः
पूर्वद्वारे स्थितौ यत्र नन्दिकाळौ महात्मकौ  २८६
अनन्तः पशुपतिश्चैव दक्षिणद्वारपालकौ
अनन्तो रक्तवर्णस्तु वज्रायुधसमन्वितः  २८७
पशुपतिर्नीलवर्णस्तु शक्तिहस्तोग्रलोचनः
पश्चिमद्वारपालौ तु दण्डिमुण्डी तथैव च  २८८
दण्डी धरेन्द्रचापाभो खड्गहस्तोग्रदंष्ट्रकः
मुण्डीकुन्देन्दुवर्णस्तु भिण्डिपालायुधस्तथा  २८९
विजयश्चैव भृङ्गीशो उत्तरद्वारपालकौ
विजयश्चेन्द्रकोपाभश्शूलहस्तो भयङ्करः  २९०
भृङ्गीशो भृङ्गवर्णस्तु क्षुरिकायुधयुक्
त्रिभङ्गी कुञ्चितं पादं उग्रदंष्ट्रं समं विदुः  २९१
प्रासादमण्टपद्वारे द्वारे चैव प्रकीर्तिताः
गोपुरद्वारदेशेषु भूताकाराणि कारयेत्  २९२
संवर्तं च त्रिधावर्तं कुण्डोदरं महोदरम्

सिंहं गजमुखं चैव एकपादन्त्वधोमुखम् २९३
श्वेतश्श्याम निभास्सर्वे खड्गहस्तसमन्विताः
केचिच्छूलायुधाश्चैव द्वारे द्वारेषु भूतकाः २९४
प्राकारगोपुरेष्वेवञ्चतुर्द्वारेषु कल्पितम्
शङ्खवर्णं काळवर्णं मराटपद्वारकल्पितम् २९५
अभयं शूलहस्तं च द्विनेत्रं श्यामवर्णकम्
वानरमुखं श्यामवर्णं नृत्तमराटपभूतकाः २९६
बहिर्गोपुरद्वारेषु भूतमेवं प्रचद्त्महे
ऊर्ध्वपादं विरूपाद्तं कमलकं वक्त्रपादकम् २९७
वामनं गळकं चैव दराडपालं महाबलम्
महागोपुरद्वारेषु सर्वादीनि प्रकल्पयेत् २९८
श्यामं पीतनिभञ्चैव शूलायुधं च पाशयुक्
द्विनेत्रा द्विभुजाश्चैव द्वारे द्वारे च भूतकाः २९९
पश्चिमालयद्वारे तु सुलभं सुमुखं यजेत्
श्वेतपीतनिभाश्चैव वेणुदराडधरान्विताः ३००
सर्वेषां द्वारपालानां पुंस्त्वं पुंस्त्वं प्रकल्पयेत्
स्त्रीद्वारे स्त्रीत्वमेवं स्याद्यथाक्रमेण कल्पयेत् ३०१
द्वारस्थान्प्रथमं यष्ट्वा द्वारपालां द्वितीयकम्
वृषभादीन्तृतीयन्तु इन्द्रादींश्च चतुर्थकम् ३०२
पञ्चमं भद्रपीठन्तु कृत्वेवं बहिरावृतम्
यत्र यत्र मुखद्वारं कवाटार्धन्तु देशिकः ३०३
तत्र तत्र विशेषेण सप्तदेवान्प्रपूजयेत्
ऊर्ध्वाधस्कन्धपटयां च विघ्नेशं पूजयेद्बुधः ३०४
गंगां च यमुनां चैव श्रीदेवीं च सरस्वतीम्
दद्दिणे दद्दिणे चैव यथाक्रमं यजेद्बुधः ३०५
भुवङ्गं च पतङ्गं च योगद्वयमिहोच्यते

विमलं च सुबाहुं च पूजयेत्तु कवाटयोः ३०६
विमलन्दक्षिणे पूज्यसुबाहुं वामके यजेत्
स्वनामाद्येन मन्त्रेण पूजयेत्तु विशेषतः ३०७
वृषादिबलिपीठान्तं परिवारं प्रपूजयेत्
पूर्वे तु वृषभं पूज्य तीक्ष्णशृङ्गाय मन्त्रतः ३०८
आग्नेय्यां चैव दुर्गां च कात्यायनीति मन्त्रतः
दक्षिणे सप्तमातृश्च वर्णवाहनचिह्नधृक् ३०९
स्वनामाद्यक्षरेणैव पूजयेत्तु विशेषतः
पूर्वे तु वीरभद्रं च विनायकं पश्चिमे यजेत् ३१०
वीरभद्रं च विघ्नेशं सप्तमातृश्च पूजयेत्
नैर्ऋत्यां गणपं पूज्य गणानांत्वेति मन्त्रतः ३११
वारुण्यां सुकुमारन्तु सुब्रह्मण्याय मन्त्रतः
वायौ ज्येष्ठां च सम्पूज्य काकध्वजायमन्त्रतः ३१२
सौम्ये विष्णुं समभ्यर्च्य इदं विष्णिवति मन्त्रतः
ऐशाने चण्डमभ्यर्च्य चण्डेशायेति मन्त्रतः ३१३
इन्द्रादिलोकपालांश्च वर्णवाहनचिह्नधृक्
स्वनामाद्यक्षरेणैव पूर्वादीनि प्रदक्षिणम् ३१४
अस्त्राणि पूजयेत्तत्र बालयौवनदेवतान्
आमोदं च प्रमोदं च प्रमुखन्दुर्मुखन्तथा ३१५
अविघ्नोऽविघ्नकर्तारौ बलिपीठे तु पूजयेत्
भूतपीठस्य चाग्रे तु इन्द्रपीठन्तु कल्पयेत् ३१६
आग्नेयादीशपर्यन्तं स्वस्वस्थाने प्रपूजयेत्
अन्तर्मण्डलबाह्ये च वशिन्यन्तरकेऽपि वा ३१७
इन्द्रादिलोकपालांश्च पूजयेत्तु विशेषतः
द्वारस्योत्तरपार्श्वे तु ब्रह्माणं पूजयेद्बुधः ३१८
पितामहेशयोर्मध्ये द्वादशादित्यकान्यजेत्

भास्करक्षेत्रपालौ च शाङ्करे दिशि चार्चयेत् ३१९
पूर्वपावकयोर्मध्ये अश्विनौ संप्रपूजयेत्
आग्नेय यमयोर्मध्ये पूजयेत्सप्तरोहिणीः ३२०
याम्यनैर्ऋतयो मध्ये पितृस्थानं विधीयते
निर्ऋतिवरुणयोर्मध्ये अप्सरो गणमेव च ३२१
वरुणवायव्ययोर्मध्ये मुनीनां पूजयेद्बुधः
वायव्यसोमयोर्मध्ये अष्टौ च वसवो यजेत् ३२२
उत्तरेशानयोर्मध्ये रुद्रेकादश पूजयेत्
द्विप्रकारेऽथवा यत्र त्रिःप्रकारेऽथवा पुनः ३२३
एक प्राकारस्थाने तु उक्तस्थाने तु पूजयेत्
उक्तस्थाने तु सम्पूज्य बलिपीठन्ततोच्यते ३२४
बलिपीठन्ततः कृत्वा चतुर्दिक्षु विशेषतः
बाह्याभ्यन्तरपीठं वा पूर्वद्वारे तु विन्यसेत् ३२५
अभ्यन्तरे भूतपीठं वा बाह्यपीठे पिशाचकम्
यक्षाणां दक्षिणे पीठं राक्षसानान्तु पश्चिमे ३२६
गन्धर्वाणान्तु सौम्ये तु मध्यमं पूर्वपश्चिमे
अधमन्तु तदग्रे तु अथवाभ्यन्तरे बुधः ३२७
स्वनामाद्येन मन्त्रेण ओंकारादि नमोन्ततः
हुंकारेण तु मन्त्रेण महाघण्टान्तु ताडयेत् ३२८
अस्त्रमन्त्रं समुच्चार्य पटन्तत्रापनीय च
गर्भगेहं ततः प्राप्य गर्भद्वारे तु पूजयेत् ३२९
ज्ञानशक्तिन्दक्षिणे पूज्य क्रियाशक्तिमथोत्तरे
द्विभुजां श्यामवर्णां च स्वनामाद्येन पूजयेत् ३३०
गर्भगेहन्ततः प्राप्य आसीनो वा स्थितोऽपि वा
शंखतोयस्य तन्मध्ये अमृतं धेनुमुद्रया ३३१
शिवमन्त्रं न्यसेत्पश्चात् गन्धपुष्पैः कुशैर्युतम्

शक्तिरेवासनं प्रोक्तं आधारक्रमयोगतः ३३२
चतुष्कोणे महासिंहमासनं पादनिर्मितम्
चतुरश्रायतं प्रोक्तं स्नाने सिंहासनं भवेत् ३३३
योगासनं दशाश्रन्तु चित्रवर्णं सुशोभनम्
दशाक्षरेण विन्यस्य पूर्वादीनि प्रदक्षिणम् ३३४
चतुष्पदं महावृत्तं चतुर्वेदन्तु धारकम्
गुणत्रयेण सञ्छाद्य चतुर्दिक्ष्वीळकान्यसेत् ३३५
एवं योगासनं प्रोक्तं आवाहयेत्सदाशिवम्
पूर्वोक्तलक्षणैर्युक्तं सद्यमन्त्रेण वाहयेत् ३३६
आवाहनासनं योगं स्नाने विमलमासनम्
पादे पाद्यं हृदा दधादाचमनन्तु दापयेत् ३३७
सिंहासनं ध्यायेन्मन्त्री अभिषेकं समाचरेत्
जलद्रोणाञ्जलं ग्राह्य गण्डिकाभिरभिषेचनम् ३३८
आढका पूरितान्गण्डी क्रमेण स्नापयेद्बुधः
आमलीफलचूर्णैश्च शिवमन्त्रैरभिषेचनम् ३३९
पिष्टचूर्णेन वालिप्य देहं सम्मर्द्य देशिकः
स्नापयेत्तु शनैश्चैव क्रमेणेव तु पूजयेत् ३४०
गन्धपुष्पैश्च धूपैश्च अन्तरेण तु चार्चयेत्
रजनीलेपनं पश्चात् गन्धोदकैश्च पूजयेत् ३४१
त्रिभारमुत्तमं प्रोक्तं द्विभारं मध्यमं स्मृतम्
अष्टौ द्रोणमधमं ज्ञेयं पूजयेत्तु जलैः क्रमात् ३४२
उशीरं चन्दनं चैव एलञ्चैव जलोषितम्
मन्त्रपुष्पं च संयोज्य महाहविः प्रदापयेत् ३४३
स्नानान्ते वस्त्रमावेष्ट्य आर्दवस्त्रं परित्यजेत्
वेदाध्ययनं चतुर्दिक्षु वाद्यगीतसमन्वितम् ३४४
पञ्चब्रह्मशिवाङ्गैश्च त्र्यम्बकं विष्णुसूक्तकम्

ब्रह्मसूक्तं गैरिसूक्तं श्रीरुद्रं पवमानकम् ३४५
षट्सूक्तमरुणं चैव त्वरितरुद्रमतः परम्
स्वस्तिसूक्तं च सर्वेषां जपेत पूजाकालके ३४६
दशाक्षरेण मन्त्रेण हृदये नैव विन्यसेत्
अथानन्तासनं कल्प्यार्चयेत्तु विशेषतः ३४७
शक्तिबीजाङ्कुरन्यायं पश्चाद्धर्मादि विन्यसेत्
धर्मज्ञानं च वैराग्यं ऐश्वर्यन्दिक्षु विन्यसेत् ३४८
गुळिका चतुर्युगाज्ञेया पुरुषाकारा नपुंसका
श्वेतं रक्तं तथापीतं कृष्णं तेषान्तु वर्णकम् ३४९
ऐशान्ये तु शिरोयुग्मं पादयुग्मन्तु नैर्ऋते
आग्नेय्यान्तु चतुष्पादं वायव्यान्तु चतुष्पदा ३५०
तस्योपरि न्यसेदेतान् अष्टौविद्येश्वरान्क्रमात्
अनन्ताद्येकनेत्रान्तं पूर्वादिषु च विन्यसेत् ३५१
ईशानादिषु कोणेषु एकरुद्रादिकन्नयसेत्
जपानिभं च कुन्दाभं बन्धूकाशोककुङ्कमम् ३५२
पद्माभमञ्जनाभं च विद्येशानां तु वर्णकम्
त्रिणेत्रं चतुर्भुजं सौम्यं जटामकुटमण्डितम् ३५३
वरदाभयहस्तं च कृष्णं परशुधारिणम्
एवन्नयस्त्वा विधानेनानन्तासनमिहोच्यते ३५५
अनन्तासनमर्चयेदेवं गन्धं पुष्पादिभिः क्रमात्
अङ्कुरं जातमूर्ध्वे तु नाळपद्मं सकर्णिकम् ३५६
ऊर्ध्वे दळाष्टकोपेतं केसरैश्च समायुतम्
ध्यात्वा चैव समालोच्य शक्तीश्चाष्टदळे न्यसेत् ३५७
वामाज्येष्ठा च रौद्री च पश्चिमोत्तरदक्षिणे
काळीं चैन्द्रे तु विन्यस्य कलविकर्णीं तु वामके ३५८
बलविकरणीं तु नैर्ऋत्यां बलप्रमथिनीं च वायवे

सर्वभूतदमनीम्मनोन्मनीमुत्तरेशानके दिशि  ३५९
अतसीकुसुमप्रख्यां द्विनेत्रां चैव धारिणीम्
वामाज्येष्ठाधूम्रवर्णा पाशहस्तामहाबला  ३६०
बलविकरणी कृष्णा परशुहस्ता त्रिनेत्रका
बलप्रमथिनी देवी रक्तवर्णायुगायुधा  ३६१
सर्वभूतदमनी देवी गदाहस्ता सुगाम्बरी
शुद्धस्फटिकवर्णाभा मनोन्मनी चाक्षमालिनी  ३६२
एवं ध्यात्वा विधानेन गन्धपुष्पादिनार्चयेत्
सद्यमंकुरसंयुक्तं वामदेवन्तु नाळकम्  ३६३
अघोरदळसङ्कीर्णं पुरुषं कर्णिकाभवेत्
ईशानं चैव पत्राणि पद्मलक्षणमीरितम्  ३६४
एवं पद्मासनं प्रोक्तं तस्योर्ध्वे स्थापयेच्छिवम्
पाद्यमाचमनं दद्यात्सद्यवामेन मन्त्रतः  ३६५
अर्घ्यं शिरसि विन्यस्य पुरुषेणैव पुष्पकम्
वस्त्रं दद्याद्धृता पश्चात् वामेनाचमनं ददेत्  ३६६
पवित्रं हृदयमन्त्रेण कवचेनोपवीतकम्
गन्धन्दत्त्वा तु वामेन पुष्पमीशानमन्त्रतः  ३६७
मकुटं कुण्डलं चैव कटिसूत्रोदरबन्धनम्
शिखामन्त्रेण दातव्यम् हारं हृदयमन्त्रतः  ३६८
भूषणैर्हेमपुष्पं च दापयेद्धृदयेन तु
सुवर्णतोरणं स्वर्णप्रभां पत्रछेदफलान्वितम्  ३६९
कवचेन तु दातव्यम् चित्रवस्त्रेण वेष्टयेत्
दुकूलपट्टदेवाङ्गैः कम्बली पञ्चवर्णकम्  ३७०
सर्वाभरणसंयुक्तं पुष्पमालाविभूषितम्
धूपन्दद्याद्यथान्यायं क्रमेणैव विशेषतः  ३७१
अगरुं चन्दनं चैव निर्यासं गुग्गुलुन्तथा

कर्पूरं कस्तूरिकां चैव मधुसर्पिगुळैर्युतम् ३७२
सर्वगन्धसमायुक्तं धूपन्दद्याद्यथाक्रमम्
लिंगं पीठं विशेषेण चन्दनैर्लेपयेद्धृदा ३७३
कस्तूरीकर्पूरसंयुक्तं वेष्टयेल्लेपनन्तथा
तदूर्ध्वे वस्त्राभरणं दद्यात्पश्चाद्धूपं प्रदपयेत् ३७४
प्रच्छन्नपटमावर्ज्य महाघण्टान्तु ताडयेत्
धूपं पूर्वेण दातव्यं घण्टानादसमन्वितम् ३७५
हस्तेन घण्टां सङ्गाह्य शिखरं हस्तसंयुतम्
दक्षिणे धूपमादाय कपित्थहस्तसंयुतम् ३७६
एवं धूपं प्रदातव्यं आचमनन्तु दापयेत्
पुष्पं हस्तेन सङ्गाह्य पताकावक्त्रसंयुतम् ३७७
ऊर्ध्वाधौ पञ्चमुखन्दत्वा पश्चाञ्जलन्तु दापयेत्
दीपन्दद्यात्तदन्ते तु घण्टानादसमन्वितम् ३७८
जलन्दत्त्वा शङ्खपात्रे हस्तद्वयसमन्वितम्
पुष्पाञ्जलिं ततः कृत्वा सुरभिमुद्रां प्रदर्शयेत् ३७९
लिङ्गमुद्रां ततः प्राप्य नीराजनन्तु दापयेत्
मुखवासेन सत्भस्म प्रदद्यात्पञ्चमूर्धसु ३८०
ललाटहृदयन्नाभिं पादञ्चैव यथाक्रमम्
बाहुद्वयं च कर्णौ च पृष्ठं ग्रीवासमन्वितम् ३८१
अथवान्य प्रकारेणाष्टत्रिंशत्कलान्वितम्
भस्मदद्याद्विशेषेण तथा षोडश सन्धिषु ३८२
हस्तं प्रक्षाळ्य तत्काले तथागौरीं सुपूजयेत्
सकळार्चनं ततः पश्चादाचमनोक्तक्रमेण तु ३८३
लिङ्गानामर्चनान्ते तु पञ्चावरणकं यजेत्
ब्रह्माङ्गकानां प्रथमावृतिस्स्या विद्येश्वराणां च गणेश्वराणां
दिक्पालकानां च दशायुधानां ईशस्य पञ्चावरणं क्रमेण

पञ्चावरणमिति प्रोक्तं तत्तद्देशेषु विन्यसेत् ३८५
शुक्लं र्शक्तं तथा कृष्णं पीताभं क्षीरसन्निभम्
सद्यादि ब्रह्मवर्णास्स्युस्त्रिनेत्राश्च चतुर्भुजाः ३८६
टङ्कशूलसमायुक्ता अभयवरदान्विताः
शान्तमीशानमित्युक्तं अन्ये रौद्रा इति स्मृताः ३८७
हृदयं शिरश्शिखाकवचं अस्त्रनेत्रसमन्वितम्
षडङ्गैश्च समभ्यर्च्य ब्रह्माङ्गं पूजयेत्ततः ३८८
जपानीलं च कुन्दाभं बन्धूकारुणकुङ्कमम्
पद्माभमञ्जनाभं च विद्येशानां च वर्णकम् ३८९
त्रिनेत्रं चतुर्भुजं सौम्यं जटामकुटमण्डितम्
वरदाभयहस्तं च कृष्णापरशुधारिणम् ३९०
एवं लक्षणसंयुक्तान्विद्येशान्पूजयेद्बुधः
शुद्धकाञ्चनवैडूर्य पद्मरागसमप्रभम् ३९१
मस्तकं बिसिनी पत्रम् शारदाभ्रकसन्निभम्
रजतं रक्तवर्णं च गणेशानान्तु वर्णकम् ३९२
पूर्वोक्तलक्षणैर्युक्तं गणेशानान्तु पूजयेत्
श्वेतं रक्तं तथा नीलं पीतं शुक्लं च धूम्रकम् ३९३
रजतं शुक्लनिभञ्चैव दिक्पालानान्निभं भवेत्
तत्तदायुधवर्णान्तु तत्तद्रूपसमायुतम् ३९४
गजमजं महिषं सिंहं मेघं कूर्ममृगन्तथा
वृषभवाहनमेतेषां इन्द्रवाहनमेव वा ३९५
एवं पञ्चावरणपूजानां गन्धपुष्पसमायुतम्
पञ्चावरणकं पूज्य पश्चाद्धूपन्ददेद्बुधः ३९६
धूपं दीपं च पुष्पं च तालवृन्तं च चामरम्
व्यजनं दर्पणं चैव हृदयेन प्रदापयेत् ३९७
सकळाराधनं पश्चान्नृत्तगेय समायुतम्

सकळार्चनकाले तु पञ्चमावरणं विना ३९८
पश्चाद्विमलासनं कल्प्य भोजनासनमेव तु
वृत्तन्तु विमलं प्रोक्तं शुद्धस्फटिकसन्निभम् ३९९
गणांबिकामुत्तरे न्यस्य ऐन्द्रे चैव महातपा
ततो गौरीं तु याम्यायां वारुणे तु प्रचोदयात् ४००
पीतं शुक्लं तथा श्वेतं कृष्णन्तेषान्तु वर्णकम्
द्विनेत्राश्चारुवदनाः पीनोन्नतपयोधराः ४०१
चतुर्षु दिक्षु संस्थाप्य गन्धादिभिस्समर्चयेत्
विमलासनो परिष्टान्तु सदाशिवन्तु ध्यानयेत् ४०२
नैवेद्यं विधिमार्गेण हविर्देवे समर्पयेत्
एवमासनमाख्यातं तत्तत्काले तु कल्पितम् ४०३
आवाहनासनं योगं स्नाने सिंहासनं भवेत्
अर्चनायां महापद्मं विमलं भोजनासनम् ४०४
पञ्चासनमिति ख्यातं पञ्चभूतात्मिकास्त्विमे
तत्तत्काले प्रकल्प्याथ आसनन्तु यथाक्रमम् ४०५
सिंहासनं चतुरश्रं योगासनन्मथाश्रकम्
पद्मासनमोंस्यादनन्तासनन्तु कूर्मवत् ४०६
वृत्तन्तु विमलं प्रोक्तं आसनाकारमेव च
श्वेतं रक्तं तथा पीतं कृष्णं चैव विचित्रितम् ४०७
गुणत्रयेण सञ्छाद्यम्मध्यपादन्तु केशवः
आसनानान्तु सर्वेषां पट्टमाच्छादयेत्ततः ४०८
अग्निसूर्यशशाङ्कैश्च क्रमेणोपरिविन्यसेत्
रजश्चैव तमश्चैव सात्विकं चोपरिन्यसेत् ४०९
आत्मानं चान्तरात्मानं परमात्मानकं न्यसेत्
गन्धादिभिस्समभ्यर्च्य हृदयेन स्वबीजयुक् ४१०
ध्यात्वा सदाशिवं देवं पूर्वोक्तलक्षणैर्युतम्

एवं ध्यात्वा तु मनसा सदाशिवं प्रपूजयेत्  ४११
पूर्वाह्ने ब्रह्मजज्ञानं मध्याह्ने तु त्र्यंबकम्
इदं विष्णिवति मन्त्रेण सायं काले तु पूजयेत्  ४१२
पार्थिवान्तमधः कन्दन्नाळं वह्न्यन्तमेव च
आकाशान्तं हि पीठं स्यात्पञ्चभूतात्मिकास्त्विमे  ४१३
पृथिव्यन्तं योगासनं सिंहासनमपान्तकम्
अनन्तमग्न्यन्तकं प्रोक्तं पद्मं वायुरिति स्मृतम्  ४१४
आकाशान्तन्तु विमलं पञ्चभूतात्मिकास्त्विमे
एवमासनं कल्प्य यथाक्रमेण पूजयेत्  ४१५
विमलासनस्य चोर्ध्वे तु हविश्चैव प्रदापयेत्
आढकं वा तदर्धं वा द्रोणं द्रोणार्धमेव वा  ४१६
शालिस्वर्णमयं प्रोक्तं तण्डुलं शुक्लवर्णकम्
तत्समं मुद्गसारं च तदर्थं वापि पाचयेत्  ४१७
गुळखण्डमाज्यपयसां दधिपयसमन्वितम्
उपदंशसमायुक्तं नाळिकेरन्तु दापयेत्  ४१८
निवेदयेत्पुरुषेणैव दिग्बलिं च समाचरेत्
सकळानान्तु सर्वेषां परिवारान्निवेदयेत्  ४१९
नित्याग्निं कारयेत्पश्चात् अग्निकार्योक्तमाचरेत्
नित्योत्सवन्ततः कृत्वा नृत्तगेयसमन्वितम्  ४२०
हविःकाले मन्त्रगेयं स्याच्छुद्धनृत्तन्तु कारयेत्
चुळुकोदन्ततः पश्चात् आगमार्चनमाचरेत्  ४२१
एवं प्रातस्तु मध्याह्ने सायं काले समाचरेत्
किं चिदस्ति विशेषोस्ति सायं कालस्य पूजने  ४२२
रात्रे रादौ ततः प्राप्य नृत्तमण्टपशोधनम्
प्रोद्धयेत्पुरुषेणैव पूर्वपुष्पं व्यपोह्य च  ४२३
नृत्तमूर्तिमलं कृत्य शुद्धनृत्तं च ध्याययेत्

गणिकानां च सर्वासां अलंकृत्य विशेषतः ४२४
वाद्यगेय समायुक्तं चतुष्षष्टिकरणान्वितम्
वाद्यकाद्वाचयेन्नित्यं तदन्ते धूपदीपकम् ४२५
सायरक्षाप्रदातव्या शास्त्रमार्गेण देशिकः
सायरक्षा प्रदातव्या भूतपात्रं च निक्षिपेत् ४२६
लवणं कार्पासकं भस्म दीपपात्रे तु पुष्पकम्
पञ्चपात्रं समारोप्य त्रिपाद्यान्देव पूर्वके ४२७
गन्धं पुष्पं च धूपं च पात्राणां च पृथक्पृथक्
सुरभिमुद्रा प्रदातव्या दिग्बन्धं चाविकारिणा ४२८
दीपञ्चैक त्रिपञ्चैव सप्तमन्नव कल्पयेत्
त्रिवारभ्रमणं चैव देवदेव्याश्च कारयेत् ४२९
लवणकार्पासभस्मानि त्रिः भ्राम्य विसृज्य च
दीपेन सर्वं निक्षिप्य रुद्रकन्यै प्रदापयेत् ४३०
पीठाग्रे तु विनिक्षिप्य एवं सायं क्रमान्नयसेत्
सायरक्षा प्रदातव्या पश्चात्पूजां समाचरेत् ४३१
अहंकारं विना यत्र सायं काले तु रक्षकम्
नीराजनसर्वकाले भस्म चैव विनिक्षिपेत् ४३२
अथवान्यप्रकारेण रात्रिकाले विशेषतः
मकुटं कर्णपुष्पं च अर्धचन्द्रं च गोळका ४३३
यज्ञोपवीतकटकं हेमरत्नसमायुतम्
शिरोमाला रुद्रमाला होतारं चोत्तरीयका ४३४
पत्रच्छेदविधिं कुर्यात् रत्नचित्रन्तु वल्लिका
हेमप्रासादसंयुक्तं दृक्कराभ्यान्तु तोरणम् ४३५
एवं कृत्वा तु सायाह्ने पूर्ववत्पूजयेत्क्रमात्
काञ्चनं वापि रौप्यं वा सर्वरत्नविचित्रितम् ४३६
पुष्पमण्टपमेवं वा यथाशोभं प्रकल्पयेत्

संक्रान्तावाप्यमावास्यां राज्ञो जन्मदिनेऽपि वा ४३७
यजमानदिने वापि मरणान्तदिनेऽपि वा
अन्येषु पुण्यनक्षत्रे सूर्यवारे विधीयते ४३८
कृत्वा पञ्चमुखं लिङ्गं तप्तहेमन्यनन्तरम्
लिङ्गाकारकृतं हैमम् रौप्यं वा तांम्रमेव वा ४३९
एतद्वै गोळकाकारं मुखपञ्च समन्वितम्
तल्लिङ्गन्निक्षिपेल्लिंगे पूर्ववत्पूजयेत्क्रमात् ४४०
अर्चनं पूजनं चैव शान्तिकं च त्रिधाभवेत्
दीपान्तमर्चनं प्रोक्तं बल्यन्तं पूजनं भवेत् ४४१
उत्सवान्तं शान्तिकं प्रोक्तं क्रियाकर्मसमाचरेत्
अथवान्य प्रकारेण पश्चिमद्वारवेश्मनि ४४२
सद्यादि पूजयेद्धीमान् परिवारमथोच्यते
कुमारस्थाने वृषभं वृषभस्थाने कुमारकम् ४४३
आदित्यवारे पूजान्ते नित्योत्सवमथाचरेत्
अष्टदिक्षु गणिका डोळा नृत्तं समाचरेत् ४४४
दण्डं हस्तेन सङ्ग्राह्य चारिकान्तु पृथक्पृथक्
एवं कृत्वा विशेषेण पूजयेत्तु सदाशिवम् ४४५
निर्माल्यं च विसृज्याथ चण्डेशाय प्रदापयेत्
ताम्बूलं मुखवासं च पानीयं च प्रदापयेत् ४४६
पञ्चावरणशक्त्यादि सर्वशक्तिमतश्शृणु
अम्बाचैव गणांबा च गङ्गा गौरी उमा तथा ४४७
पञ्चब्रह्मकशक्त्योस्तु षडङ्गसहितं स्मृतम्
श्रद्धा स्वभा तथा क्षान्तिर्ग्रहा पुष्टिश्रुतिस्तथा ४४८
कीर्तिर्मेधा तथाष्टौ च विद्येशानां तु शक्तयः
कृपादया देवनार्था च कान्ती काळी च मन्त्रिणी ४४९
मालिनी च उमा चैव वज्रिणी च गणेशकाः

अदितिश्चैव देवी च नीलकासितधारिका ४५०
निशिनी चैव ह्लादिनी ----- रुषी विदुः
भाषमञ्जरी चैव रिद्धिश्चैव निवृत्तिका ४५१
सवित्री सरस्वती ह्येते लोकपालाश्च शक्तयः
शचीदेवी पुलोमी च स्वाहा चैव स्वधा तथा ४५२
कलकाली तथा चैव जाताचैव सुकेशिनी
लाधिनी महिनी चैव विलासिनी महिषी तथा ४५३
वृत्तिश्चैव निवृत्तिश्च वसुधा च स्वरूपिणी
सावित्री सरस्वती ह्येता लोकपावै च शक्तयः ४५४
विलसिनी विरूपी च सधारी विमुखी तथा
निखी च दङ्खी चैव मति श्रीर्हंसमालिनी ४५५
एता दशायुधा शक्तिः पञ्चावरणशक्तयः
प्रथममासनं कल्प्य द्वितीयमावाहयेच्छिवम् ४५६
तृतीयं पाद्यतोयं च चतुर्थमाचमनीयकम्
पञ्चमञ्चार्घ्यदानं च धूपदानन्तु षष्ठकम् ४५७
सप्तममभिषेकस्यादष्टमं गन्धपुष्पकम्
नवमं वस्त्राभरणं च दशमं धूपदीपकम् ४५८
एकादशन्तु मुद्राणां द्वादशन्तु निवेदनम्
त्रयोदशं बलिन्दद्या नित्याग्निं वै चतुर्दशम् ४५९
नित्योत्सवं पञ्चदशं षोडशं नृत्तमेव च
इदं पूजाक्रमं प्रोक्तं पञ्चशुद्धिक्रमागतम् ४६०
अथ व्यूहक्रमं वक्ष्ये विद्याव्यूहादिपूर्वकम्
विद्याव्यूहोत्र विज्ञेयो वामदेवादिको महान् ४६१
वानप्रस्थस्थितिं चासौ स्थितिमार्गावलम्बिनः
वामादि शक्तयश्चाष्टौ विद्याव्यूहा इति स्मृताः ४६२
अघोरादिरष्टधा प्रोक्तं विग्रहेश्वरव्यूहकम्

अघोरश्चातिघोरश्च घोरघोरतरस्तथा ४६३
सर्वतश्शर्व सर्वेभ्यो रुद्ररूप इति स्मृतः
विग्रहेश्वरव्यूहानां अष्टधपरिकीर्तिताः ४६४
अम्बिका ब्रह्मवेताळी त्रिगुणी स्थापुमत्यपि
विरूपिणी महाज्वाला मालिनी च तथा पुरा ४६५
सुवेताळी भवेद्गौरी शक्त्यघोरा च नन्दिनी
एकादश विधौ राज्ञ व्यूहामहाबलाव्रता ४६६
रुद्रव्यूहो भवेद्रुद्रो व्रतश्च बलशालिना
ऊर्ध्वकोटचयुतं रक्तं तत्वमैश्वरमास्थितम् ४६७
विद्येश्वराद्य सज्योति तन्मूर्तिं च गणेश्वरम्
अनन्तेशादि विद्येश व्यूहान्व्यूहक्रमान्नयजेत् ४६८
ततस्सदाशिवं तत्वं परं व्याप्तं तथा स्थितम्
तत्र ब्रह्माङ्गमन्त्रैश्च नादो बिन्दुस्सदाशिवः ४६९
शान्त्यतीतेन्धिका शक्तिर्दीपिका रोचिका तथा
मोचिकाचोर्ध्वगा चैव व्यापिनी व्योमरूपिणी ४७०
अनन्ताचानाथाचानाश्रिता च तथा भवेत्
मन्त्रयोनिर्महामाया पुनश्शक्तिश्च निष्कळा ४७१
अतीन्द्रियश्शिवस्तस्मात् निष्कळो निर्गुणोत्तरः
चिद्रूपोयं समाख्यातो शुद्धतत्वे तत्वपञ्चकम् ४७२
शब्दादि दशके यस्मात् गुणैरुक्तान्वये समे
अङ्गाङ्गि भावविहितो विशेषस्यात्तमादितम् ४७३
एवन्तु भुवनैरुक्ता शिवान्ततत्वसङ्गति
इत्येते पञ्चनिर्देश व्यूहतत्वक्रमं यजेत् ४७४
पदब्रह्मं कलाब्रह्मं तत्वब्रह्ममनन्तरम्
अक्षरब्रह्मनामानि वर्णब्रह्ममनन्तरम् ४७५
भुवनब्रह्ममित्येषां ब्रह्मनामानि कथ्यते

सदाशिवं लिङ्गकुम्भस्थं महेशं यागमूर्तिकम् ४७६
उत्सवं रुद्रदैवत्यं इत्येता अधिदेवताः
आत्मतत्त्वन्नयसेत्सव्ये विद्यातत्त्वन्तु सौम्यके ४७७
शिवतत्वं न्यसेन्मध्ये ध्यानकाले सदाशिवम्
एवमेव त्रिसन्ध्यायां पूजयेदादि शैवकः ४७८
निर्माल्यं च निवेद्यं च भुक्त्वा चान्द्रायणं चरेत्
चण्डदत्तं हि निर्माल्यं भूमौ वह्नौ जले क्षिपेत् ४७९
गवां च कर्मदासानां दापयेत्तु विचक्षणः
षोडश प्रतिमा चैव विघ्नेशः क्षेत्रपालकः ४८०
परिवारादिभिश्चैव गुरूपुस्तकवह्निना
शर्वः पशुपतिश्चोग्रो रुद्रश्चैव भवस्तथा ४८१
ईशानश्च महादेवो भीमश्च वसवस्तथा
उमादिगणेशानं व्यूहं व्यूहक्रमान्यजेत् ४८२
यक्षनागेन्द्रयोगीनां विष्णुब्रह्म च दुर्गकाः
काळी च सूर्यदेवाश्च अन्त्यत्सर्वाश्च देवताः ४८३
न निर्माल्यमिति प्रोक्तं सर्वेषां चैव भुक्तये
लिङ्गभुक्तन्निवेद्यं च चण्डेशाय प्रदापयेत् ४८४
एतन्निर्माल्यमाख्यातं वर्जयेत्तु विशेषतः
न निर्माल्यमिति ख्यातं उमास्कन्दादि भुक्तिकम् ४८५
तदादि षोडश देवानां चण्डदत्तं विना भुवि
हविः काले तु धूपं स्यात् हविरन्ते तु धूपकम् ४८६
पूजादौ धूपदीपं स्यात्पूजान्ते धूपमिष्यते
पापीरोगिपरिभ्रष्टैः नास्तिकैश्श्रुतिदूषकैः ४८७
तत्काले तु पटन्तत्र पूजाकाले पटं कुरु
हविः काले पटं यत्र त्रिकाले पटमावहेत् ४८८
महाघण्टाताडनं कालं स्नानं भोजनकालकम्

सन्ध्यात्रिघटिका पूर्वं आत्मशुद्ध्यादिकारयेत् ४८९
घटिका द्वे भवेत्स्नानम् घटिकैकार्चना भवेत्
घटिकार्धन्निवेद्याय बलिदानन्तु तत्समम् ४९०
नित्याग्निकार्यमर्धं च नित्योत्सवं त्रिनाडिका
नित्योत्सवेन पूजायां सार्धेन सप्तनाडिका ४९१
हविष्यन्तन्त्रिपादेन त्रिनाडिरुच्यते बुधैः
एवमेव त्रिसन्ध्यायां पूजयेत्तु विशेषतः ४९२
अर्धरात्रौ बलिं दद्यात्काम्यार्थी च विधानतः
सुगन्ध्यगरुकर्पूरचन्दनं कुङ्कुमान्वितम् ४९३
लेपयेत्तु हृदामन्त्री लिङ्गं पीठं च गौरिकाम्
जातीघनकदंबानि द्विकर्णी चित्रकर्णिका ४९४
नन्द्यावर्तं श्रियावर्तं नीलोत्पलं च मल्लिका
एवमादि सुगन्धाद्यैः पुष्पमाल्यैश्च पूजयेत् ४९५
शिवमन्त्रेण देवेशं अर्चयेत्तु विशेषतः
गौरीमिमाय मन्त्रेण गौरीं वामेन पूजयेत् ४९६
ध्यायेत्सादाशिवं रूपं देवीरूपं विचिन्तयेत्
धूपन्दद्यादघोरेण घण्टारवसमन्वितम् ४९७
कर्पूरावर्तितन्दीपं वर्तिकार्पाससम्युतम्
गोघृतन्दीपमुज्वाल्य त्र्यङ्गुळमुत्तमं स्मृतम् ४९८
दीपन्दद्याद्विशेषेण प्रशान्तायेति मन्त्रतः
द्रोणद्वयं शिवं वापि गुळखण्डसमन्वितम् ४९९
मरीचिलवणैर्युक्तं नाळिकेरं च मुद्गकम्
अपूपञ्च प्रदातव्यं पायसान्नं गुळैर्युतम् ५००
कदळी मनसांम्राणि त्रिफलानि निवेदयेत्
पानीयन्दापयेत्तत्र मुखवाससमन्वितम् ५०१
ताम्बूलं तत्र कर्पूर ----- तैलसम्युतम्

इष्टकाद्यप्रसिद्धिं च लभते नात्रसंशयः ५०२
एवं काम्यार्चनं प्रोक्तं अधिदेवाः प्रकीर्तिताः
अष्टपुष्पं त्रिगन्धं च सप्तवारि निवेदयेत् ५०३
त्रिष्वर्घं च त्रिधाधूपं घराटाताडनमष्ट च
प्रछन्नं च चतुर्णां वै द्वयोर्मुद्रां प्रदर्शयेत् ५०४
आवाहनार्घ्यपाद्येषु स्नाने धूपे विलेपने
निवेद्ये च विसर्गे च अष्टपुष्पं सुपूजयेत् ५०५
आवाहनार्घ्यपाद्येषु स्नाने चामने तथा
निवेदने विसर्गे च वारि सप्त नियोजयेत् ५०६
आवाहनेषु पूजान्ते विसर्गान्ते तथैव च
अर्घ्यं दद्यात्तु मन्त्रज्ञस्त्रिष्वेवं संप्रकल्पयेत् ५०७
आसनाचनकाले च स्नानान्ते पूजनेपि च
अधवासनपूजान्ते महाधूपं प्रशस्यते ५०८
स्नानानारंभे तदन्ते च धूपदाने विशेषतः
निवेद्यकाले तस्यान्ते उत्सवादौ तदन्तके ५०९
नृत्त ---- धीमान्महाघराटानि ताडयेत्
निर्माल्यापनये चैव पुष्पालङ्करणे तथा ५१०
निवेद्यकाले पूजान्ते प्रछन्नपटमीरितम्
आवाहने च पूजान्ते मुद्रादर्शनमिष्यते ५११
गन्धन्दद्यात्तु पुष्पैस्तु पुष्पं गन्धैर्नियोजयेत्
धूपन्दद्यात्तु दीपेन दीपं दीपेन योजयेत् ५१२
देवानामर्चने काले प्रछन्नपटसंयुतम्
पपी रोगी परिभ्रष्टैर्नास्तिकैश्श्रुतिदूषकैः ५१३
राक्षसैरसुरैश्चैव पिशाचैर्ब्रह्मराक्षसैः
देवनिन्दाकृतघ्नां च दूरतः परिवर्जयेत् ५१४
गच्छेत्प्राकारबाह्ये तु घराटाघोषैश्च संयुतम्

मूलमन्त्रशतं जप्त्वा शिवसान्निध्यकं नयेत्  ५१५
चिन्तयेत्तु नरास्सर्वे शिवमात्मनि भक्तितः
स्वयमभ्यर्चनं श्रेष्ठं पश्चाद्भोजनमाचरेत्  ५१६
अर्चनायामशक्तश्चेत् स्पर्शनं वापि कारयेत्
स्पर्शके चाप्यशक्तश्चेल्लिङ्गदर्शनमुत्तमम्  ५१७
दिवारात्रौ त्रिसन्ध्यं वा प्रविशेत्तु शिवालयम्
बाह्य प्राकारदेशे तु सव्यमाहप्रदक्षिणम्  ५१८
सव्यापसव्यमार्गेण अन्तर्हारप्रदक्षिणम्
प्रदक्षिणन्ततः कुर्यात् सोमसूत्रन्नलङ्घयेत्  ५१९
सोमसूत्रोपरिष्टात्तु शक्तिलङ्घन्नकारयेत्
निर्माल्यलंघनं दोषं पतन्तं धरणीतले  ५२०
कीटकर्णपतङ्गाद्यैर्जायती धरणीतले
तस्मात्सर्वप्रयत्नेन सव्यापसव्यकं कुरु  ५२१
प्रदक्षिणद्विगुणञ्चैव नमस्कारफलं लभेत्
अष्टाङ्गं चैव पञ्चाङ्गं नमस्कृत्वा विचक्षणः  ५२२
बाहुभ्यां चैव जानुभ्यां मस्तकं चैव पञ्चसु
प्रभुनाममिति ख्यातम् पञ्चाङ्गमिति कथ्यते  ५२३
हस्ताभ्यां मूर्धतश्चैव नमस्कृत्वा तु यत्नतः
दण्डन्नमस्कारमित्युक्तं दण्डवद्रज्जुवन्मता  ५२४
पादे जानुद्वयं चैव हस्तयोरुभयोरपि
ललाटेन च कर्णाभ्यां हनुना धरणीं स्पृशेत्  ५२५
अष्टाङ्गमिति विख्यातं सर्वकार्यसुखप्रदम्
एवं कृत्वा तु मनसा शिवलोकं सगच्छति  ५२६
प्रदक्षिणनमस्कारमात्मनोर्पणमेव च
अथवान्यप्रकारेण भक्तिहर्म्यं यथाचरेत्  ५२७
चुळुकोदन्ददेत्पश्चात्कायशुद्धेस्तु कारणम्

उपचाराग्यहं वद्त्ये परार्थदेवपूजने ५२८
दशोपचार पूजान्ते हविष्यन्ते तु षोडश
बल्यन्ते पञ्चविंशच्च षट्त्रिंतत्तागडवान्तके ५२९
ग्रावाहनं पाद्यमर्घ्यं ग्राचमनं च स्नानकम्
गन्धपुष्पं च धूपं च नैवेद्यं च विसर्जनम् ५३०
दशोपचारकं ज्ञेयमित्यन्तेन समाचरेत्
ग्रावाहनन्तु संस्थाप्य पाद्यमाचमनार्घ्यकम् ५३१
स्नानं वस्त्रोपवीतं च भूषणं गन्धपुष्पकम्
धूपन्निवेद्यन्नमस्कार विसर्जने ----- ५३२
षोडशान्युपचाराणि हविष्यन्ते समाचरेत्
ग्रावाहनं च संस्थाप्य स्वागतं च मान्यकम् ५३३
पाद्यमाचमनं चार्घ्यं स्नानं वस्त्रोत्तरीयकम्
भूषणं गन्धपुष्पं च धूपदीपन्तथार्घ्यकम् ५३४
नीराजनं व्यजनं च चामरं छत्रदर्पणम्
दशमुद्रादर्शनं च पंचावरणपूजनम् ५३५
नैवेद्यं होमकर्मा च बलिदानं जपन्तथा
समाधिस्स्तोत्र नमस्कारमुत्सवं हितनृत्तकम् ५३६
विसर्जनं च षट्त्रिंशदुपचारमिति स्मृतम्
नृत्तान्ते पौष्टिकेप्येवं परार्थे देवपूजने ५३७
ग्रात्मार्थमुपचारं च ग्रहं वद्त्ये श्रुणुष्विह
ग्रावाहनं स्थापनं च स्वागतं सन्निरोधकम् ५३८
ग्रङ्गप्रत्यङ्गकल्पं च पाद्यमाचमनार्घ्यकम्
गन्धं पुष्पं च धूपं च दीपं स्नानं तथैव च ५३९
वस्त्रोपवीतगन्धं च पुष्पं धूपं च दर्पणम्
नीराजनं च गीतं च नाटचन्नृत्तं तथैव च ५४०
मुद्रादर्शनमेवोक्तं ग्रावृतार्चनमेव च

नैवेद्यं होमकर्मा च मूलमन्त्रजपन्तथा ५४१
बलिदानं जपञ्च
प्रदक्षिणनमस्कारञ्चुळुकोदमाचमनीयकम्
चत्वारिंशद्विधानेन आत्मार्थे च प्रपूजने ५४२
सन्ध्याया लक्षणं वक्ष्ये श्रुणुष्वेकाग्रमानसा
स्वस्थन्नराक्षिनिमिषं चतुर्भागं तृटिस्मृतम् ५४३
तद्द्वयन्तु लयं प्रोक्तं निमिषं तद्द्वयं भवेत्
निमिष पञ्चदशं काष्ठा तिथिकाष्ठा कला स्मृता ५४४
त्रिंशत्कला मुहूर्तं च तदेव घटिकाद्वयम्
भास्करोदयमारभ्य त्रिपादेन त्रिनाडिका ५४५
रात्र्यन्तकमिति प्रोक्तं ज्ञात्वैवं सर्वमाचरेत्
जलसङ्ग्रहणं चैव पुष्पसङ्ग्रहणन्तथा ५४६
देवतास्थापनन्तीर्थ रात्र्यन्ते च विशेषतः
तच्छेषमर्चनं चैवऽपरं त्रिदशनाडिका ५४७
उदयास्तमनं चैव चतुर्यामं प्रकीर्तितम्
अस्तमयादुदयान्तं च चतुर्यामं प्रशस्यते ५४८
अष्टयाममिति ख्यातं अहोरात्रमिति स्मृतम्
अधिवासनानि सर्वाणि मध्यरात्रौ तु कारयेत् ५४९
उदयादि मध्याह्नान्तं प्रतिष्ठाकर्मयोग्यकम्
अपराह्ने न कर्तव्यं मृगयात्राक्रमं कुरु ५५०
उशीरन्नन्दनं चैव दूर्वासिद्धार्थकैर्युतम्
यवेलाभ्यां च संयुक्तं अर्घ्यद्रव्यं प्रकीर्तितम् ५५१
पाद्यद्रव्यमिति ख्यातं पादौ पाद्यं च निक्षिपेत्
एलालवङ्गकर्पूरतिंबुजाती फलं मुरम् ५५२
षडङ्गमाचमनं द्रव्यमाचमने तु दापयेत्
आपक्षीरकुशाग्राणि यवैस्सिद्धार्थ तण्डुलैः ५५३

तिलदूर्वासमायुक्तं अर्घ्यद्रव्यं प्रकीर्तितम्
अगरुं चन्दनं चैव कोष्ठं कुङ्कममेव च ५५४
तदर्धपादमेवन्तु कर्पूरेण समायुतम्
गन्धद्रव्यमिदं प्रोक्तं पुष्पाणां विधिरुच्यते ५५५
श्वेतं रक्तं तथा कृष्णं सत्वं रजस्तमस्स्मृतम्
पीतवर्ण ----- शोणमुदीरितम् ५५६
नीलोत्पलसमं पुष्पन्नभूतन्नभविष्यति
नन्द्यावर्तं श्रियावर्तं श्वेतार्कमुदये ददेत् ५५७
करवीरद्रोणपुष्पं च पद्मम्मध्यदिने ददेत्
पट्टिकाचैव धुर्त्तूरं पट्टीचम्पकमिष्यते ५५८
सायाह्ने च प्रदातव्यं अन्यत्सर्वं प्रदापयेत्
जातीघनकदम्बा च द्विकर्णीं चार्धरात्रके ५५९
नन्द्यावर्तं श्रियावर्तं मन्दारं श्रुतिपत्रिका
श्वेतार्कं मालतीं चैव पुन्नागं कुरवन्तथा ५६०
एवमादीनि पुष्पाणि सात्विकानि प्रचक्षते ५६०
रक्तोत्पलं तथा पद्मं बृहती धूर पाटली
एवमादीनि रक्तानि राजसानीति कथ्यते ५६१
कर्णिकारं च धुर्तूरं पुष्पं कारण्डवन्तथा
एवमादीनि चान्यानि मिश्रकानि इति स्मृतम् ५६२
तुलसी च नृपञ्चैव जम्बुका नागनन्दिका
एकपत्रा रविन्दं च विष्णुक्रान्ति तथैव च ५६३
अपामार्गं कुशन्दूर्वा पञ्चबिल्वं शमी तथा
एतानि पत्रजातीनां तामसानीति कथ्यते ५६४
पत्राणां जातिभिस्सर्वैस्सार्वकालं प्रपूजयेत्
ततो नीलोत्पलं चैव तामसन्त्विति कीर्तितम् ५६५
करंजं वकुळं चैव केतकी माधवी तथा

लागुळीं धूकनिर्गुण्डी किंशुकं चैव वर्जयेत् ५६६
अतिपक्वमपक्वं च मुकुळं चैव वर्जयेत्
केशकीटोपविद्धं च लूतसूत्रावृतानि च ५६७
स्वयं पतितपुष्पाणि सञ्चितान्यपि वस्त्रके
एकाहोषितपुष्पाणि वर्जयेत्तु विशेषतः ५६८
शमीबिल्वमपामार्ग कुशदूर्वा महातथा
नागनन्दी रुद्रवल्ली धातकी पत्रमेव च ५६९
ऐन्द्री चैव महाभद्री द्रोणपत्रन्तथैव च
पद्मजातिषुसर्वेषु नीलोत्पलसमन्नहि ५७०
पुष्पलक्षणमाख्यातं श्रुणु धूपस्य लक्षणम्
अगरुं चैकभागं स्यान्निर्यासं द्विगुणं भवेत् ५७१
चन्दनं त्रिगुणं प्रोक्तं ------------
वृक्षबीजोद्भवैस्सर्वैश्शिवदीपन्तु वर्जयेत् ५७२
गोघृतन्तदलाभे तु शुद्धतैलेन दीपयेत्
शुद्धतैलस्य भावे तु मधूकतैलमाचरेत् ५७३
स्नानद्रव्यालाभे तु शुद्धतोयेन स्नापयेत्
गव्यानामप्यलाभे तु घृतेनैवाभिषेचयेत् ५७४
हविषामप्यलाभे तु दीपारोपणमाचरेत्
वस्त्राणामप्यलाभे तु पत्रिणा चैव पूजयेत् ५७५
पञ्चामृतमलाभे तु घृतञ्चैव तु पूजयेत्
सर्वं ध्यायेत्तु मनसा सर्वद्रव्यमलाभके ५७६
त्रिसन्ध्यं च बलिं दद्यात् द्वारादि बलिपीठकम्
दिग्देवमस्त्रसंयुक्तं बलिं चैव प्रदापयेत् ५७७
महापीठन्ददेत्भूतमामोदापूर्वमादिकम्
आमलीफलमात्रं वा मुष्टिं वा बलिकन्ददेत् ५७८
गन्धपुष्पैस्सर्मभ्यर्च्य वाद्यताळसमन्वितम्

बलिप्रदानमेवोक्तं उदकादीन्क्रमाद्ददेत् ५७९
एवं बलिविधानान्ते नित्याग्निं कारयेद्बुधः
आग्नेय्यां तु प्रकर्तव्यं अग्निकार्योक्तमाचरेत् ५८०
समिदाज्य चरूँल्लाजान्सर्षपांश्च यवान्तिलान्
---------- क्रमेणैव तु होमयेत् ५८१
शतमर्धं तदर्धं वा तदर्धं होममाचरेत्
होमद्रव्यन्तु कुटुंबं समित्षोडशमेव च ५८२
कुण्डं वा स्थण्डिलं वापि वृत्तं प्रधानकं कुरु
गार्हपत्यं गृहस्थानां पितृणां दक्षिणानलम् ५८३
आहवनीयं च देवानां तत्तद्रूपं वदाम्यहम्
बालयौवनवृद्धाग्निस्त्रिविधन्तत्प्रकीर्तितम् ५८४
बालाग्निश्च कर्तव्यो प्रतिष्ठाकालकर्मणि
उत्सवादीनि कर्माणि कारयेद्यौवनाग्निका ५८५
सव्यापसव्यनित्याग्नि वृद्धाग्निर्नित्यहोमके
अग्निकार्योक्तमार्गेण शेषकार्यं समाचरेत् ५८६
एवमग्निं समभ्यर्च्य नित्योत्सवमथाचरेत्
पूर्वाह्णे पुष्पलिंगं च मध्याह्ने चान्नलिङ्गकम् ५८७
सायाह्ने चाक्षतं लिङ्गं द्वादशाङ्गुळमानतः
सर्वकालेध्वादकारोहन्तु चेत्पुष्पन्निक्षिप्य यत्वतः ५८८
चन्द्रशेखरति नाम मास्कन्दसहितन्तु वा
केवलं वा प्रकर्तव्यं सर्वाभरणभूषितम् ५८९
गन्धपुष्पादिनाभ्यर्च्य पादुकारोहणन्त्यजेत्
देवदासी शिरोद्धृत्य क्रमात्कृत्वा प्रदक्षिणम् ५९०
स्वर्णं मरकतं चैव स्फाटिकं रजततांम्रकम्
पादुकं च प्रकर्तव्यं लिङ्गं स्वर्णं च राजतम् ५९१
ताम्म्रं मरकतं चैव स्फटिकं चैव कारयेत्

लिङ्गानां कौतुकं चैव पट्टु शैवकरोपरि ५९२
सशिबिकां ----- वा -------
------------- सर्वालङ्कारसम्युतम् ५९३
उष्णीषमुत्तरीयं च पवित्रहस्तसम्युतम्
शिरो--हे दात्रि दशनैः शनैः प्रदक्षिणम् ५९४
शुद्धनृत्तसमायुक्त गीतवाद्यसमायुतम्
मन्त्रपाठकसम्युक्तं स्वस्तिवाचसमायुतम् ५९५
वितानध्वजसम्युक्तं छत्रचामरसम्युतम्
व्यजनतालवृन्तैश्च क्रमेणैव समाचरेत् ५९६
पिञ्छचामरसम्युक्तं श्वेतचामरसंयुतम्
प्रज्वालदीपसंयुक्तं पुष्पवृष्टिसमायुतम् ५९७
दण्डनृत्तसमायुक्तं यष्टिनृत्तसमन्वितम्
डोलानृत्तसमायुक्तं नित्योत्सवन्तु कारयेत् ५९८
प्रथमं प्रदक्षिणं कुर्यादन्तर्हारे विशेषतः
द्वितीयं प्रदक्षिणं कुर्यान्मध्यहारे विशेषतः ५९९
गोपुरे वाद्यहीने तु बलिहीनं प्रदक्षिणम्
अन्तर्हारे पुनर्गत्वा प्रदक्षिणमथाचरेत् ६००
प्रथमप्रदक्षिणं कुर्यान्मङ्गिणीताळवाद्यकम्
परिवाराणां द्वितीयं प्रदक्षिणमथाचरेत् ६०१
वृषस्य वृषताळन्तु होतव्यं मन्त्रिणी तथा
मातृणां चण्डवाद्यन्तु विघ्नेशस्य ढक्करी ६०२
वारुणे च पुटं --- स्य ज्येष्ठायां पुन्निताळकम्
ता -- प्रहारसौम्यायां वृषभं विघ्नचण्डके ६०३
गोपुरे वाद्यनिर्घोषैः शंखघोषसमन्वितम्
ततः पुरास्थितं कृत्वा त्रिःकृत्वा तु प्रदक्षिणम् ६०४
शम्बरे बलिपीठस्य प्रविश्याभ्यान्तरन्ततः

एक प्राकारसम्युक्ते कारयेत्त्रिः प्रदक्षिणम् ६०५
त्रिः प्राकारयुतं गेहं पीठमेकं प्रदक्षिणम्
गान्धारं द्वारदेशे तु आग्नेय्यां कौशिकन्तथा ६०६
दक्षे श्री कामरञ्चैव नैर्ऋत्यां तक्करागकम्
कोल्लीं पश्चिमदेशे तु वायव्यः न्नृपसङ्करम् ६०७
सोमे तक्केशिरित्युक्तं रामं गिरीशगोचरे
बलिपीठे --एडकी चैव ताळं गीतसमायुतम् ६०८
मवराजमकञ्चैव देवसन्निधिगीतकम्
इत्येवं गीतभाषाभिः प्रदक्षिणमथाचरेत् ६०९
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं शुधीः ६१०
इति योगजे क्रियापादे नित्यार्चनाविधिर्नाम पञ्चमः पटलः

पादुकार्चनकं कार्यं गन्धपुष्पादिभिः क्रमात्
शुद्धनृत्तसमायुक्तं स्वस्थाने देवमर्चयेत् १
अष्टोत्तरशतन्नृत्तं भावयेगणिकान्तकम्
नृत्तस्थान्ते विशेषेण देवदेवं विशेषतः २
अभिमुखीकरणं यत्तु तदावाहनमुच्यते
पूजापरिसमाप्तौ तु विमुखन्तद्बहिः स्थितम् ३
सकळार्चनकाले तु पञ्चमावरणं विना
आसनन्तु प्रकर्तव्यम् ------------ ४
गन्धपुष्पादिभिः पूज्य स्वनाम्ना चैव देशिकः
आगमार्चनकं कुर्यात्स्वगृहं प्रविशेद्बुधः ५
नित्योत्सवेन पूजायां तस्यां संवत्सरोत्सवम्
कारयेत्तु विशेषेण अन्यथा चेन्नकारयेत् ६
बलि नित्याग्निश्रीबल्यां त्रिकालन्तु समाचरेत्
एवं क्रमेण विधिवत् यथा विभवविस्तरम् ७

अथ वक्ष्ये विशेषेण मुद्रादर्शनमुत्तमम्
त---ताभ्याण् ताडयेत्ताळं शोधये जायनो भवेत्  १
तर्जनी मूलपर्वस्थ अङ्गुष्ठां नु ---- कृता
एतां हि शङ्खमुद्रां च स्नानकालप्रदर्शयेत्  २
मणिबन्धन्ततः कुर्यादङ्गुष्ठतलमध्यगम्
तर्जनीमूलपर्वस्थ मध्यलग्नौ प्रकीर्तिता  ३
कनिष्ठाभ्यन्तरन्नाभि ----  सुरभि स्मृतः
संयोज्य हस्तौ द्वौ कन्तु अन्तरे सुषिरं कृतम्  ४
बिसिनी मुकुळाकारं स्नानकाले प्रदर्शयेत्
त्यक्त्वा करतलाङ्गुष्ठौ शेषं श्लक्ष्णोर्ध्वगं क्रमात्  ५
कृत्वावाहनमाख्यातम् कुर्यादावाहनन्तथा
मुष्टिं कृत्वा तु हस्ते च का प्रष्ठे तु योजने  ६
कनिष्ठौ विसृतौ दीर्घौ निष्ठुरा सन्निरोघने
अङ्गुष्ठौ प्रक्षिपेन्मध्ये कनिष्ठौ विसृतौ युतौ  ७
बीजमुद्रेयमाख्याता दर्शयेच्छक्तिकल्पने
द्वौ हस्तौ तलके योज्य मध्याङ्गुळ्याग्रहं युतौ  ८
तर्जनी नामिके योज्य अङ्गुष्ठाभ्यां कनिष्ठके
इमां पञ्चमुखी मुद्रां दर्शयेद्वक्त्रकर्मणि  ९
कराभ्यामञ्जलिं कृत्वा सवक्त्रास्यादनामिका
तयोरग्रे तु संलग्नौ शेषाश्च विसृताश्च यः  १०
द्रव्यमुद्राभवेदेषा द्रव्याभावे प्रदर्शयेत्
उत्तानौ तु करौ पश्चान्मणिबन्धन्तु कारयेत्  ११
प्रसार्य मध्यमाङ्गुळ्यौ शिवाख्यां स्थापनावहम्
वामाङ्गुळीव प्रसृता अङ्गुष्ठमूर्ध्निसंयुतम्  १२
दक्षिणे दक्षिणे मुष्टिमङ्गुष्ठं त्वोर्ध्वगस्थितम्

मुष्टिमूर्ध्वगतं कृत्वा संहारं मुद्रया विदुः १३
उत्तानौ तु करौ कृत्वा मणिबन्धन्तु कारयेत्
तर्जनी च कनिष्ठा च प्रस्थितौ संस्थितौ तथा १४
मुद्रा सदाशिवाख्याता आह्वाने च प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा कनिष्ठाङ्गुष्ठसम्युतौ १५
तर्जनी मध्यमा युक्तौ अनामिकोर्ध्वकृतासनौ १६
इति योगजे क्रियापादे मुद्रालक्षणन्नाम षष्ठः पटलः

अथ वक्ष्ये विशेषेण स्नपनस्य विधिं परम्
पूर्वोक्तलक्षणोपेतान्पादद्यात्तु प्रपूरितान् १
प्रत्येकं वस्त्रहेमं स्यात्कूर्चसूत्रयुतान्कुरु
सापिधानं च सर्वेषां शिवकुम्भाभितो न्यसेत् २
शिवव्यूहन्नयसेन्मध्ये कुंभन्तस्य प्रधानकम्
अधिकद्वयसम्पूर्णा शेषाणयासन्प्रधानकम् ३
व्यूहप्रधानद्रव्याणि वक्ष्यते क्रमयोगतः
ईकारे मधुविन्यस्य लृकारे इक्षुकान्नयसेत् ४
कदली फलमेकारे गुळमैकारके न्यसेत्
ओकारे तु न्यसेल्लाजं ----- औकारके न्यसेत् ५
अंकारे तु तिलं प्रोक्तं अः कारे सक्तुकान्नयसेत्
सकारे सर्षपन्नयस्य स्वकारे सितसर्षपम् ६
गकारे नाळिकेरं च वेणुबीजं घकारके
ङकारे भस्मविन्यस्य मातुलुङ्गं च कारयेत् ७
हेमरौप्यारकूटैश्च तांम्रकांस्यायसैरपि
पत्रसीसकसंयुक्तं लोहन्यस्त्वाज्ञकारके ८
सौराष्ट्रं रोचना श्यामा गैरिकाञ्जनतारकैः
नमश्शिवजनन्यश्च टकारेण तु विन्यसेत् ९

श्यामं प्रियङ्गुका श्यामा त्रिषष्ठिक सर्षपैः
यवनीवारकोद्रवबीजोदं स्यात्सकारके १०
नवनीतं नाभिं च लघुकर्पूरपत्रके
त्वगोलावं कोष्ठमुस्तास्ततीन्कुङ्कमजातिभिः ११
लघुकच्चोलयुक्यान्ते गन्धोदं स्यात्सकारके
सामुद्रं वृषशृङ्गस्थं क्षेत्रपर्वतसम्भवैः १२
गजदन्तं कुशमूलं कर्कटं ----- मृत्कुरु
जलं मृदम्भ इत्युक्तं ढकारेण तु विन्यसेत् १३
विष्णुक्रान्ति सहादेवी ---- गोक्षुरैः
कृताञ्जलि शिरीषाभ्यां मार्जनं स्याणकारके १४
पद्मदूर्वाङ्कुशा गौरी सर्षपं भद्रसंयुतम्
परिमार्जनमित्युक्तं जलन्यासन्तकारके १५
तुलसी बिल्वमपामार्ग शमीभृङ्गं धकारके
जलपत्रोदकं प्रोक्तं विन्यसेद्वै दकारके १६
पद्मके शूलवज्रासि परशुटंकं थकारके
अञ्जने नार्धविष्केण हेम्ना चैव कृतास्त्रकैः १७
उक्तमस्त्रोदकं ह्येतं नकारे विन्यसेद्बुधः
नाळिकेरांम्रपनसैः कदळी मातुलुङ्गकैः १८
नारङ्गद्वयकञ्चैव जलैर्युक्तं फलोदकम्
पकारे विन्यसेत्तत्र स्थण्डिलोपरि विन्यसेत् १९
पलाशप्लक्षजम्बूकपाटल्यश्वत्थयोरपि
वटोदुम्बरयोश्चैव अभियुक्तन्तु यज्जलम् २०
कषायोदकमित्युक्तं पकारे विन्यसेत्क्रमात्
अभ्रकत्रयमुक्ताम्भः प्रोक्तमाढोदनान्तकम् २१
जलं कान्तोदकं प्रोक्तं भकारे विन्यसेद्बुधः
श्रीकृष्णे शिरराभ्यां च पुष्करेण समायुतम् २२

पीवरी भारिबेराभ्यां मूलोदं स्यान्मंकारके
गोमूत्रं गोमयं क्षीरं दधिसर्पिकुशोदकम्  २३
मयूरशिखया भृङ्गं भ्रजांजसुरोचके
जलकाभ्युदयं प्रोक्तं विन्यसेद्वै धकारके  २४
लोध्रद्वयलवङ्गाभ्यां भूर्जयुक्तं तु यज्जलम्
पुष्पोदकमिति प्रोक्तं रकारे विन्यसेद्बुधः  २५
लकारे चैव गोधूमं नीवारं स्याद्वकारके
शकारे गन्धतैलं स्यात्षकारे चैव विन्यसेत्  २६
सकारे रजनी चूर्णमीषत्कर्पूरसंयुतम्
अन्यसं मृच्च पत्राश्च मन्यद्धे मनसा युतम्  २७
सापिधानं भवेदेवं व्यूहेशानं प्रकीर्तितम्
व्यूहप्रतीशपरितः कलशावरणद्वयम्  २८
लक्ष्मीदान्तं कुशं दूर्वापामार्गं च बिल्वकम्
शम्यन्तौ सर्वव्यूहानां प्रथमावरणस्य च  २९
चम्पकं पद्मतुळसी नन्द्यावर्तं च मल्लिका
जनद्रोणं च मन्दारं द्विकर्णीकरवीरकम्  ३०
विष्णुक्रान्ति सितार्कं च एकपत्रारविन्दकम्
बकुळं कुरवं चैव रक्तोत्पलं तथैव च  ३१
सर्वेषां चैव व्यूहानां द्वितीयावरणस्य च
कलशेष्वेव धर्मकूर्चे चक्राद्यामभिधाय च  ३२
व्यूहे चाभिमुखादिस्यात्सर्वेषां च प्रदक्षिणम्
स्थापनं पूजनोद्वासमुत्तमत्रितयस्य च  ३३
सर्वेषामपि देवानां कलशं शिरसा वहेत्
क्षिप्रं पक्वफलं लाभे अपक्वफलमाचरेत्  ३४
पत्रालाभे तु पुष्पं स्यात्पुष्पालाभे तु मूलकम्
द्रव्यालाभे जलं पूर्यमिति शास्त्रस्य निश्चयः  ३५

इति योगजे क्रियापादे स्नपनविधिर्नाम सप्तमः पटलः

अथ वक्ष्ये विशेषेण शीतकुम्भविधिक्रमम्
ज्वरापस्मारनाशाय वसूरि उष्णदाहकम् १
सर्वरोगविनाशाय वर्षार्थं च प्रकल्पयेत्
द्वात्रिंशत्प्रस्थसम्पूर्णं बिंबप्रभवसम्भवम् २
त्रिसूत्रं वेष्टयित्वा तु यवान्तरस्मन्वितम्
ग्रीवाग्रे स्थण्डिलं कृत्वा ---दळकसमन्वितम् ३
स्थण्डिलैश्शोभितं कृत्वा लाजदर्भतिलैर्यथा
वस्त्रपूतेन तोयेन पूरयेत्कुम्भमुत्तमम् ४
सर्वगन्धसमायुक्तं पञ्चरत्नसमन्वितम्
सवस्त्रं सापिधानं च सकूर्चं हेमसम्युतम् ५
स्थण्डिले विन्यसेत्कुम्भं सर्वमन्त्राणि विन्यसेत्
आचार्यस्सोपकरणै गन्धपुष्पाक्षतैः क्रमात् ६
पूर्वद्युरधिवासस्याद्रात्रौ जागरणं चरेत्
आचार्यश्शिवकुम्भन्तु कुशैस्स्पृष्ट्वा जपं चरेत् ७
व्योमव्यापिमहामन्त्रं रोगशान्त्यै जपं चरेत्
इति होमं व्रतन्तस्य तस्याग्रे तु विशेषतः ८
प्रभाते देव देवस्य मूर्धमध्ये तु विन्यसेत्
चतुष्पाद्यान्तु विन्यस्य याज्ञिकैर्वृक्षकैश्शुभैः ९
लिङ्गोर्ध्वे ---- चतुर्दिक्षु विचक्षणः
वृत्तं चतुरश्रं वा षोडशाङ्गुलविस्तरम् १०
एकाङ्गुळप्रमाणेन मध्ये सुषिरमुच्यते
वस्त्रैरावेष्ट्य कुम्भं च पुष्पमाल्यैर्विभूषितम् ११
कुम्भ्यान्यान्यतरम्मूले सुषिरं कारयेद्बुधः
लोहसूच्यग्रमानेन नाळं हेममयम्भवेत् १२

द्विगुणं क्षीरधारायां मधुनि त्रिगुणन्तथा
हृदयेन तु मन्त्रेण कुम्भमारोप्य यत्नतः १३
शिवकुम्भन्तु संस्थाप्य स्थरिडले पूर्ववद्बुधः
सप्ताहे चैव पञ्चाहे त्रियहे वा विशेषतः १४
स्रवन्मूर्धन्यहोरात्र सर्वशान्तिकरं स्मृतम्
नित्यपूजां विशेषेण काले काले विशेषतः १५
द्विगुणं पूजयेत्तत्र यथाशक्त्या तु पूजयेत्
उपकुम्भे तु निक्षिप्य जलं वा क्षीरमेव वा १६
कुम्भावरोहणं यावत्तावच्छान्तिं समाचरेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः १७
अन्ते कुम्भं परित्यज्य अस्त्रमन्त्रेण मन्त्रवित्
स्थापनन्तु यथाशक्त्या यथोक्तं कारयेद्बुधः १८
प्रभूतहविषन्दद्यात् पूर्वोक्तविधिना सह
सर्वभक्तजनानां च अन्नपानादि दापयेत् १९
इति योगजे क्रियापादे शीतकुम्भविधिर्नाम अष्टमः पटलः

अथ वक्ष्ये विशेषेण शिवोत्सव विधिक्रमम्
सर्वदोषनिवृत्यर्थं सर्वलोकसुखावहम् १
सर्वदेवप्रियार्थं स्यात्सर्वप्राणि सुखावहम्
राज्ञो विजयवृद्ध्यर्थं सर्वरक्षार्थ साधनम् २
उत्सवन्नवधा प्रोक्तं पुष्कळं विजयान्वितम्
त्सव इत्युच्यते सृष्टिरुद्भिद्याच्छब्दभाषितम् ३
उत्सवं सृष्टिकारित्वात् उत्सवः कथितः क्रमात्
प्रतिष्ठोत्सवविधिश्चैव मासोत्सवविधिः परम् ४
अमावास्यां समारभ्य मासोत्सवन्तथैव च
वसन्तोत्सव विधिश्चैव पुष्ये पुष्योत्सवन्तथा ५

चैत्रमासे त्रयोदश्यां मासर्क्षे रविचन्द्रयोः
वैशाखे तु विशाखान्तं वसन्तोत्सवमेव च ६
यजमानदिने चैव राजजन्मदिनेऽपि वा
सर्वमासेषु कर्तव्यं महोत्सवविधिक्रमम् ७
प्रातःकालेह्यवभृतं सार्वकाले समारभेत्
निश्चित्य मासनक्षत्रे अतिथिम्मुरसन्तथा ८
षोडशस्सर्वरक्षार्थं पैतृकं द्वादशन्तथा
सौख्यं च नवकं प्रोक्तं सप्ताहं श्रीकरं भवेत् ९
पार्थिवं पञ्चविधनं त्रियहं सात्विकन्तथा
एकाहं शिवमेवोक्तं उत्सवं कारयेद्बुधः १०
सम्पूज्य देवदेवेशं अनुज्ञाप्योत्सवं कुरु
सप्तविंशति नक्षत्रे ध्वजारोहणपूर्वकम् ११
भेरीमादौ समारभ्य अष्टाविंशद्दिनं भवेत्
अङ्कुरार्पणपूर्वं हि पश्चाद्ध्वजं समर्चयेत् १२
तद्दिनात्पूर्वरात्रौ तु वृषयागं समाचरेत्
प्रतिष्ठादिक्रमेणैव कार्पाससितमेव च १३
द्वादशं दशहस्तं वा नवहस्तमथापि वा
ध्वजपटं पञ्चभागं स्याच्छिखरं हस्तमेव च १४
हस्तार्थं पुच्छमेवोक्तं द्वित्रिहस्तं च पृष्ठकम्
तत्पटं पञ्चधा भज्य मध्यभागे वृषं लिखेत् १५
तदूर्ध्वे अस्त्रदेवं स्यात्तदूर्ध्वे छत्रचामरम्
पार्श्वे तु दीप ----- मङ्कुरमेव च १६
धूपपात्रन्तथा प्रोक्तं पूर्णकुम्भैरलङ्कृतम्
श्वेतं रक्तं तथा पुष्पं सर्वालङ्कारमेव च १७
वृषभं श्वेतवर्णाभं सर्वसिद्ध्यै प्रकारयेत्
कामार्थं रक्तवर्णेन आभिचारे कृष्णवर्णकम् १८

स्थितं वा शयनं चैव वृषभन्तु लिखेद्बुधः
शृङ्गौ च रक्तवर्णेन वालं पीतेन शोभितम् १९
नेत्रन्तु कृष्णवर्णं च रक्तनीलेन मिश्रितम्
सर्वाभरणसम्युक्तं सर्वपुष्पैरलङ्कतम् २०
शिवाग्रे मण्टपं कुर्यात् गोमया लेपनन्तथा
दर्भमालां समावेष्ट्य मुकासृग्दामलम्बितम् २१
तन्मध्ये स्थण्डिलं कृत्वा न्निद्राकुंभन्तु स्थापयेत्
अभितोष्टौ घटांश्चैव स्थापयेत्पूर्ववत्क्रमात् २२
तन्मध्ये वृषमावाह्य स्वर्णपुष्पसमन्वितम्
परितोष्टौ घटान्नचस्त्वा स्वस्वबीजेन विन्यसेत् २३
उक्षश्च गोपतिश्चैव शङ्कुकर्णस्तथैव च
तीक्ष्णशृङ्गस्तथा नन्दी वृषाणी च पशुस्तथा २४
महोदराक्षमश्चैव स्वस्वनाम्ना प्रपूजयेत्
वृषगायत्रिमन्त्रेण वृषकुम्भेन्यसेत्क्रमात् २५
तदग्रे स्थण्डिलं कुर्यात् सितैश्च सिकतैस्तथा
चतुरश्रं समं कुर्यात् हस्तमात्रेण देशिकः २६
प्राक्सूत्रन्तु त्रिसूत्रं स्यादुदक्सूत्रन्तथैव च
ब्रह्मजज्ञानमन्त्रेण मध्यरेखां समालिखेत् २७
नाकेसुपर्णमन्त्रेण दक्षिणे तु लिखेद्बुधः
आप्यायस्वेति मन्त्रेण उत्तरेण समालिखेत् २८
यो रुद्रे तु मन्त्रेण उदक्सूत्रन्तथैव च
इदं विष्णिवति मन्त्रेण पूर्वरेखा समन्वितम् २९
इन्द्रं विश्वेति मन्त्रेण पश्चिमे वै समालिखेत्
शिवांभसा तु संप्रोक्ष्य कूर्चं प्रादेशमात्रकम् ३०
वागीश्वरं च वागीशीं आवाह्य पूजयेत्क्रमात्
तन्मध्ये वह्निकं स्थाप्य होमं कुर्याद्विचक्षणः ३१

पूर्ववद्वह्निसंस्कारं पूजयेद्वृषभन्तथा
ब्रह्मणं पूर्वतोऽभ्यर्च्य उत्तरे विष्णुमेव च  ३२
दक्षिणे रुद्रमभ्यर्च्य अनन्तं पश्चिमे यजेत्
परिस्तरेत्तु दर्भैश्च पूर्वादीनि परिस्तरेत्  ३३
प्रोक्षणी मूर्ध्वतस्स्थाप्याथ प्रणीतपात्रकम्
आज्यस्थालीं ततः कुर्याच्चरुस्थालीन्तु स्थापयेत्  ३४
प्रणीतां प्रोक्षणीं चैव आज्यस्थालीन्त्वधोमुखम्
स्रुक्स्रुवम्मुत्तरे स्थाप्य अधोमुखन्तु धारयेत्  ३५
प्रादेशमात्रसमिधो परिधित्रयमेव च
समिदाचार्यपूर्वे तु विष्टरेण समन्वितम्  ३६
इन्धनन्तत्र कुर्वीत अग्निं प्रज्वालयेत्क्रमात्
आहुति त्रितयं कुर्याद्व्याहृतिं जुहुयात्क्रमात्  ३७
पञ्चब्रह्मषडङ्गेन जुहुयाच्चैकमासुधीः
वृषगायत्रिमन्त्रेण सर्षपं कवचेन तु  ३८
आढकं मुद्गमाषं च शालीनां जुहुयात्क्रमात्
शिखामन्त्रेण जुहुयात्प्रत्येकन्तु शताहुतीः  ३९
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिं च शिरसा अग्निबीजमनुस्मरन्  ४०
होमान्ते वृषकन्तस्याद्वृषकुम्भन्तु मूर्तिनाम्
तदन्ते भेरि देवं स्यात्स्थण्डिलोपरि विन्यसेत्  ४१
ब्रह्माविष्णुश्च रुद्रश्च अधिदेवाः प्रकीर्तिताः
गन्धं पुष्पं च धूपं च दीपञ्चैव निवेद्यकम्  ४२
अर्चयित्वा भेरिदेवानाचार्यो ताडयेत्क्रमात्
ब्रह्मजज्ञानमन्त्रेण प्रथमन्ताडयेत्तथा  ४३
इदं विष्णिवति मन्त्रेण द्वितीयन्ताडयेत्क्रमात्
त्र्यम्बकेन मन्त्रेण तृतीयन्ताडयेत्क्रमात्  ४४

आहूय वाद्यकं पश्चात् शुद्धपारशिवन्तथा
अङ्गपूर्णसमायुक्तं शक्त्या सहितमेव च ४५
शक्तिहीनं विना कुर्या वर्जयेत्तु विचक्षणः
नन्दिकेश्वरमावाह्य वाद्यकान्हृदि सम्पुटम् ४६
यजनं धूपदीपं स्यात्पुष्पं हस्ते विधापयेत्
तत्पुष्पं विन्यसेद्भेरीन्नमस्कृत्वा तु वाद्यकम् ४७
सप्तताळविधानेन प्रोक्तमाचार्य शिष्यकम्
अस्त्रदेवं समभ्यर्च्य मध्यपत्रे तु रुद्रकम् ४८
ब्रह्माणन्दक्षिणे पत्रे वामपत्रे जनार्दनम्
गौरीं मध्यममूले तु सरस्वतीन्दक्षिणे तथा ४९
लक्ष्मीं च वामपार्श्वे च तन्मूले तु प्रपूजयेत्
गणेशं पालिका मध्ये स्कन्दन्दराडाग्र एव च ५०
अनन्तादिशिखराडयन्तं पालिकोपरि विन्यसेत्
क्षेत्रपालं तथेशान्यां दराडमध्ये तु शास्त्रकम् ५१
चन्द्रसूर्यान्तनक्षत्रं दराडे चैव तु पूजयेत्
चराडेशन्दक्षिणे मूले सर्वदेवेषु सङ्गहेत् ५२
सर्वदेवतमावाह्य अस्त्रेरौव समाचरेत्
धूपदीपसमायुक्तं सर्वदेवनिवेद्यकम् ५३
अस्त्रदेवमन्नलिङ्गं च बलिपात्रन्तथैव च
प्रतिमा चन्द्रधारं च वृषध्वज सहैव च ५४
ग्रामप्रदक्षिणं कुर्यात्सन्धिदेवान्समर्चयेत्
दिनदेवतमावाह्य पीठाग्रेवा ध्वजाग्रके ५५
प्रथमं विघ्नरात्रं स्यात्पैशाचन्तु द्वितीयकम्
तृतीयं ब्रह्मरात्रं स्याद्गन्धर्वन्तु चतुर्थकम् ५६
पञ्चमं भूतरात्रं स्यात्षष्टमं गुहरात्रकम्
सप्तमं ऋृषिरात्रं स्यादष्टमन्नागरात्रकम् ५७

नवमं चेन्द्ररात्रं स्याद्दशमं विष्णुरात्रकम्
एकादशं रुद्ररात्रं द्वादशं शिवरात्रकम्  ५८
गणरात्रन्त्रयोदश्यां चतुर्दश्यान्तु राक्षसम्
पञ्चदशं शास्तृरात्रं शक्तिरात्रन्तु षोडशम्  ५९
विघ्नादिशिवपर्यन्तं पैतृकोत्सवमेव च
विघ्नादि चेन्द्रपर्यन्तं सौख्यमुत्सवमेव च  ६०
विघ्नादि ऋषिरात्रान्तं तृतीयं राजसं भवेत्
विघ्नादि भूतपर्यन्तं पार्थिवोत्सवमेव च  ६१
विघ्नादि ब्रह्मपर्यन्तं पार्थिवोत्सवमेव च
विघ्नादि ब्रह्मपर्यन्तं सात्विकोत्सवमेव च  ६२
प्रथमं गणरात्रन्तु अपूपन्तिलचूर्णकम्
शुद्धान्नं तु निवेद्यं स्यात् विघ्नरात्रबलिं क्षिपेत्  ६३
शुद्धान्नं कृसरान्नं च माषयुक्तन्दधिप्लुतम्
द्वितीयेऽहनि दातव्यम् पैशाचं मन्त्रमुच्चरन्  ६४
शुद्धान्नं बृहती सर्पि दधिक्षीरन्तु मिश्रकम्
तृतीये हनि दातव्यम् ब्रह्ममन्त्रमनुस्मरन्  ६५
कृसरान्नं लड्डुकं सर्पि कदळी गुळसम्युतम्
चतुर्थेऽहनि दातव्यम् गान्धर्वं मन्त्रमुच्चरन्  ६६
मुद्गान्नं गुळसंयुक्तं मधुक्षीरघृतन्तथा
पञ्चमेऽहनि दातव्यं भूतमन्त्रमनुस्मरन्  ६७
पायसान्नं घृतं चैव कदळीगुळसम्युतम्
षष्टमेऽहनि दातव्यम् स्कन्दमन्त्रमुदीरयन्  ६८
शुद्धान्नं घृतसंयुक्तं बृहतीफलमेव च
सप्तमेऽहनि दातव्यं ऋषीणां मन्त्रमुच्चरन्  ६९
शुद्धान्नं मुद्गसंयुक्तं गुळघृतसमायुतम्
अष्टमेऽहनि दातव्यं नागमन्त्रमनुस्मरन्  ७०

शुद्धान्नं घृतक्षीरं च पनसांम्रफलन्तथा
नवमेऽहनि दातव्यं इन्द्रमन्त्रमनुस्मरन् ७१
शुद्धान्नं दधिसंयुक्तं गुळखण्डसमन्वितम्
कदळी पनसंचाम्र नाळिकेरसमन्वितम् ७२
दशमेऽहनि दातव्यं विष्णुमन्त्रमनुस्मरन्
माषान्नं घृतसम्युक्तं क्षीरेण गुळखण्डकम् ७३
एकादश बलिं कुर्याद्रुद्रमन्त्रमनुस्मरन्
शुद्धान्नं दधिसंयुक्तं बृहती मूलसम्युतम् ७४
द्वादशेऽहनि दातव्यं शिवमन्त्रमनुस्मरन्
कृसरान्नं गुळं सर्पिर्मधुक्षीरं फलन्तथा ७५
त्रयोदशेऽह्नि दातव्यं गणानां मन्त्रमुच्चरन्
माषान्नं मांससंयुक्तं गुळक्षीरं घृतन्तथा ७६
चतुर्दशेऽह्नि दातव्यम् राक्षसं मन्त्रमुच्चरन्
पायसं घृतसम्युक्तं गुळखण्डसमन्वितम् ७७
पञ्चदशेऽह्नि दातव्यं शस्त्रमन्त्रमनुस्मरन्
शुद्धान्नं लश-- सर्पिः कदळीकारवल्लिका ७८
वल्लीमूलन्तथा गन्धम् गुळक्षीरघृतन्तथा
षोडशेऽहनि दातव्यं शक्तिमन्त्रमनुस्मरन् ७९
दिनदेवतमावाह्य नित्यमेव बलिं क्रमात्
ब्रह्मादीशानपर्यन्तम् लोकपालबलिं क्षिपेत् ८०
शुद्धान्नं घृतसंयुक्तं घृतक्षीरविमिश्रकम्
तत्तत्स्वनाममन्त्रेण लोकपालबलिं क्षिपेत् ८१
पश्चिमद्वारहर्म्ये तु वास्तुभूतबलिं क्रमात्
ब्रह्मादि नृत्तपर्यन्तं वरुणादि प्रदक्षिणम् ८२
एतद्बलिक्रमं कुर्यान्नित्यमेव बलिं क्षिपेत्
तद्वारे बलिनिक्षिप्य वृषभं तत्र पश्चिमम् ८३

ज्येष्ठादि विघ्नपर्यन्तं स्वस्वनामबलिं क्षिपेत्
दिनदेवतमावाह्य पीठाग्रे वा बलिं क्षिपेत् ८४
तद्वारे तु महालक्ष्मी गोस्थाने तु सरस्वती
कूपे चैव महामोटी तन्मन्त्रेण बलिं क्षिपेत् ८५
ईशाने सुन्दरी चैव देवी कोष्ठे बलिं क्षिपेत्
लिङ्गे चैवाथवा पीठे अन्नलिङ्गं विसर्जयेत् ८६
जले तीरे च तं कुर्यात्सर्जयेदन्नलिङ्गकम्
आवाहनं बलिं कुर्यादुद्वाहनबलिं क्षिपेत् ८७
द्वात्रिंशेन बलिं कुर्यात्षोडशन्दिनमेव च
चतुर्विंशद्बलिं कुर्याद्द्वादशन्दिनमेव च ८८
अष्टादशबलिं कुर्यात्सौख्यस्येवं विधीयते
मनुना कौशिकं चैव एकाहन्तु बलिक्रमम् ८९
बलिसंख्या इति प्रोक्तं उत्सवस्य विधिं श्रुणु
उत्सवं कारयेद्धीमान् पुष्यनक्षत्रमेव च ९०
प्रतिष्ठाद्युत्सवहीने च यथेष्टम्मासि वा नयेत्
राजजन्मन्नि नक्षत्रे सुखप्रीतिकराय च ९१
यद्वारे तु महापीठ प्रासादश्चोर्ध्व एव च
व्यापी लिङ्गवती चैव यजेदुत्सवमेव च ९२
प्रतिष्ठाशिखरे हीने उत्सवं वर्जयेद्बुधः
अङ्गोपाङ्गन्तु प्रत्यङ्गपरिवारसमन्वितम् ९३
प्रासादद्वारपीठानां अङ्गमेवमिहोच्यते
हीने तूत्सवहीने च वर्जयेत्तु विचक्षणः ९४
प्रारध्वमुत्सवे हीने यथेष्टमासिवानयेत्
आगतं सहसो कृत्वा पश्चादुत्सवमाचरेत् ९५
पूर्वोत्सव विहीने च यथेष्टमासिवानयेत्
जात न --- काले नष्टे पुनरुत्सवमाचरेत् ९६

प्रायश्चितविधिं कुर्याच्छान्तिहोमं समाचरेत्
मासनक्षत्रतीर्थान्तमाव्रतम्मुत्सवं परम् ९७
ग्रामनक्षत्रतीर्थान्तं प्रतिष्ठानक्षत्रमेव च
राजजन्मनि नक्षत्रे यजमान वराद्बुधः ९८
चन्द्रनक्षत्रमित्युक्तं सौरसावनतीर्थकम्
सर्वमासेषु कर्तव्यं
तत्काले तीर्थमारभ्य क्रमं सम्भवति ध्रुवम् ९९
गुरुशुक्रास्तमने तन्मासमुत्तमं कुरु
प्रतिष्ठां वर्जयेत्तत्र उत्सवं कारयेद्बुधः १००
चन्द्रनक्षत्रमित्युक्तं सौरसावनतीर्थकम्
सर्वमासेषु कर्तव्यं उत्सवं कारयेत्क्रमात् १०१
नित्यन्नैमित्तिकं काम्यं उत्सवं त्रिविधं भवेत्
नित्यन्नित्योत्सवं कुर्यान्नैमित्तिकं विशेषतः १०२
यथेष्टं काम्यमित्युक्तमुत्सवं त्रिविधं भवेत्
नित्योत्सवन्ततः कुर्यान्नैमित्तिकमथोत्सवम् १०३
इष्टमासेषु काम्यार्थमुत्सवं कारयेद्बुधः
नित्योत्सवं विना यत्र महोत्सवं विसर्जयेत् १०४
ध्वजं संवाहयित्वा तु वर्जयेत्तु विचक्षणः
यजमानेच्छया कुर्याद्यथेष्टमासि वानयेत् १०५
ध्वजे ध्वजन्नकर्तव्यं कर्तव्यं वृषभध्वजम्
उत्सवत्थोत्सवं कुर्याद्विष्टशैवोत्सवो द्विज १०६
विष्णुकल्याणमेवोक्तं शिवाङ्गन्तु समाचरेत्
शिवाङ्गन्तत्र कुर्वीत विष्णुयागं विनाचरेत् १०७
देवानामपि कल्याणे नृकल्याणन्नकारयेत्
ग्रामे च नगरे चैव पत्तने राजधानिके १०८
सर्वदेवोत्सवं कुर्यादेकस्मिन्नेव वास्तुनि

हरि पृष्ठं सुशान्तं स्याद्ध्वरपृष्ठन्तु शोभितम् १०९
सर्वदेवोत्सवं कुर्यादेकवास्तु बलिक्रमम्
उत्सवं कारयेद्धीमान् सर्वमासे तु पुष्यकम् ११०
माघान्तं माघमासे तु फल्गुन्यामुत्तरान्तकम्
शुक्लपक्षे तृतीये तु रोहिरायन्तं विशेषतः १११
पूर्णे तु मासनक्षत्रे समुद्रस्नानमुत्तमम्
पूर्वाषाढान्तपक्षे तु अश्विन्याश्विजमासके ११२
कार्तिके कृत्तिकान्तं वा आर्द्रान्तं मार्गशीर्षकम्
सर्वमासेषु कर्तव्यमार्द्रान्तमुत्सवं परम् ११३
विफलं चान्द्रमासे तु सौरमासं प्रशस्तकम्
सर्वोत्सवमेनापि सौरसंख्येनमेव च ११४
आरम्भं त्रिविधन्तेषां केतुरोहणपूर्वकम्
भेरी ताडनपूर्वं च अङ्कुरार्पणपूर्वकम् ११५
अङ्कुरं वृषयागन्तु वृषभन्तु प्रतिष्ठितम्
उत्सवाङ्कुरादीनि तु मे तु माधं --- द्र के व तु ११६
समुद्रस्नानमन्त्रीर्थांकुरन्त्रितीयते यत्
सर्वेषामुत्तमं कुर्यादङ्कुरं त्रिविधं भवेत् ११७
नयनमोक्षणं चैव जलाधिवासनन्तथा
आचार्यश्शिल्पिहस्तेन नयनोन्मीलनन्तथा ११८
शालितराडुलमध्ये च वृषभं स्थाप्यमेव च
अष्टदिक्षु विशेषेण उक्षादिकलशान्नयसेत् ११९
पुरायाहं वाचयेत्तत्र होमं कुर्याद्विशेषतः
हेमसूचिप्रहारन्तु सुमुहूर्ते तु कारयेत् १२०
मधुसर्पिषी तथा कुर्यान्नयनोन्मीलने तथा
धूपदीपन्तथाकृत्वा धान्यदर्शनकन्नयेत् १२१
दर्पणे अभिषेकन्तु मुद्गान्नन्तु निवेदयेत्

शिल्पिनं च विसृज्याथ गोमयालेपनं कुरु १२२
मराडलं समलंकृत्य मध्ये स्थरिडलमेव च
नळिनं च लिखेन्नयस्य तन्मध्ये वृषकुम्भकम् १२३
अभितः कलशानष्टौ उद्धादीनि क्रमान्नयसेत्
हेमं ---- इर्वां च स्थरिडलन्तत्र कारयेत् १२४
होमान्ते नयनोन्मीलम्मधुसर्पिभिर्लोचनं स्पृशेत्
दर्शनं सर्वद्रव्याणां अभिषेकं च दर्पणे १२५
दर्पणे जलाधिवासं च प्रतिष्ठां कारयेद्बुधः
शिवाग्रे मराटपं कुर्याद्गोमयालेपनन्तथा १२६
मराटपे स्थरिडलं कुर्यादष्टद्रोणैश्च शालिभिः
तन्मध्ये स्थरिडलं कृत्वा स्थापयेद्वृषभध्वजम् १२७
कौतुकं बन्धयेद्धीमान् स्वर्णेन रजतेन वा
अथवा कार्पाससूत्रेण बन्धयेद्वृषशृङ्गके १२८
पुरायाहं वाचयेत्तत्र कौतुकं बन्धयेत्क्रमात्
त्रियंबकेन मन्त्रेण रद्धासूत्रन्तु बन्धयेत् १२९
शयनं स्थरिडले कुर्यात्तदग्रे वृषकुम्भके
अभितः कलशानष्टौ उद्धादीनि क्रमान्नयसेत् १३०
तदग्रे वह्निकं स्थाप्य होमं च पूर्ववत्कुरु
तदग्रे भेरि देवं स्यात् स्थरिडलं तत्र कारयेत् १३१
पश्चिमे अस्त्रदेवस्य शालिभिस्स्थरिडलं क्रमात्
लाजपुष्पैरलङ्कृत्य दर्भमालासमन्वितम् १३२
अग्निकार्योक्तमार्गेण होमं कृत्वा विचद्धणः
प्रोद्धणी प्रणीतकं पात्रमाज्यस्थालीन्तु विन्यसेत् १३३
उत्तरे आसनं कल्प्य अधोमुखन्तु साधयेत्
प्रोद्धणी पात्रमादाय तोयं कुशाद्धतैर्युतम् १३४
प्रादेशकूर्चसहितम् त्रिभिरुत्प्लवनन्तथा

आज्यस्थालीं प्रणीतां च ऊर्ध्वमुखं पात्रमेव च १३५
प्रोक्षयेत्तु कुशाग्रेण प्रोक्षण्याश्च जलन्तथा
प्रणीतायां जलं पूर्य कुशपुष्पाक्षतैर्युतम् १३६
जनार्दनं समावाह्य उत्तरे स्थाप्यमेव च
दक्षिणे चैव ब्रह्माणं कूर्चपुष्पाक्षतैर्युतम् १३७
प्रादेशकूर्चसहितम् त्रिस्पर्शनं जलस्य च
अग्नि संस्कारमेवन्तु आज्यसंस्कारमेव च १३८
आज्यस्थाल्यां घृतं पूर्य प्रादेशिकपवित्रकम्
त्रिवारोत्प्लवनं कृत्वा विसृज्याग्नौ निधाय च १३९
दर्भाग्रैः प्रदक्षिणं कृत्वा आज्यसंस्कारमेव च
समिदाज्य चरूल्लाजान्माषशालि यवां तथा १४०
तिलसर्षपमुद्गानि गुळखण्डेकादश स्मृतम्
परिस्तराणां परिधि विष्टरत्रयमेव च १४१
तदूर्ध्वे समिधो कृत्वा परिषेचनमाचरेत्
समिधस्सद्यमन्त्रेण आज्यं वामेन हूयते १४२
अघोरेण चरुं हुत्वा लाजन्तत्पुरुषेण च
तिलमीशानमन्त्रेण सर्षपं कवचेन तु १४३
मुद्गमाषयवांश्चैव शिवमन्त्रेण हूयते
वृषमूलं च गायत्रीं शतमष्टोत्तरं शतम् १४४
द्रव्यान्ते व्याहृतिं हुत्वा स्विष्टमग्नेति मन्त्रतः
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् १४५
पूर्णाहुतिं च शिरसा अग्निबीजमनुस्मरन्
ताम्बूलं दापयेत्पश्चा मूर्तिं वृषभकुम्भके १४६
मन्त्रन्यासन्ततः कुर्याद्वृषमूलेन मन्त्रतः
भेरीघोषन्ततः कुर्यादावाहनमथोच्यते १४७
आहूयवाद्यकान्पश्चा शुद्धां च पारशैवकान्

दीक्षितैश्चैव सर्वैश्च आचार्यो ताडयेत्क्रमात् १४८
नववस्त्रोत्तरीयं च यज्ञोपवीतमेव च
सर्वाभरणसम्युक्तं सर्वपुष्पैरलङ्कृतम् १४९
पुष्पाञ्जलि समायुक्तं भेरीघोषसमन्वितम्
ताडयेन्नवताळन्तु आचार्यश्शिष्य एव च १५०
अस्त्रदेवन्तु सम्पूज्य देवतावाहनं चरेत्
शिवादि चण्डपर्यन्तमावाहनविधिं कुरु १५१
हविर्निवेदयेद्धीमान्सर्वदेवन्निवेदयेत्
बलिपात्रसमायुक्तमन्नलिङ्गास्त्रमेव च १५२
ध्वजं चण्डेश्वरं चैव ग्रामप्रदक्षिणन्तथा
अन्येषकं समादाय ध्वजपटं बन्धयेत्क्रमात् १५३
सन्धिदेवतमावाह्य दिनदेवसमन्वितम्
अन्तर्बलिक्रमं पूर्वं यागान्ते वा बलिं क्षिपेत् १५४
सर्वमभ्यर्चयेद्धीमान्पश्चाद्वास्तु बलिं क्षिपेत्
मन्त्रपीठं समादाय रत्नजं लोहजन्तथा १५५
अथवा दारुपीठं स्यात्तालमात्रप्रमाणतः
अथवा कदली पत्रे वास्तुदेवबलिं क्षिपेत् १५६
ग्रामप्रदक्षिणं कृत्वा महापीठबलिं क्षिपेत्
ध्वजपटं स्थालिका चैव दण्डमूले सुसंस्थितम् १५७
दण्डलक्षणमेवोक्तं दारुजं वाथ कारयेत्
असनं खदिरं चैव बिल्वं चम्पकमेव च १५८
देवदारुकसम्युक्तं व्याघ्रवृक्षसमन्वितम्
मधूकार्जुनकं चैव कृष्णवृक्षसमन्वितम् १५९
मुनिवृक्षसमायुक्तं क्रमुकं वेणुदण्डकम्
वक्रं भिन्नं च सुषिरं क्रमिकोटरवर्जितम् १६०
———————————————

------------------------- १६१
तद्ग्रीवस्य समं वापि गोपुरस्य समन्तु वा
त्रिस्त्रिंशद्धस्तमेवोक्तं पञ्चविंशतिहस्तकम् १६२
अथवा हस्तमेवोक्तं दण्डायामं विधीयते
क्षीरवृक्षन्तु सङ्गाह्य यष्टिं कृत्वा विचक्षणः १६३
चतुर्हस्तप्रमाणेन त्रितायन्तु समं कृतम्
अग्न्यङ्गुळायनं प्रोक्तं --- चर्शाकारमेव च १६४
द्वयसुषिरसमायुक्तं अर्धचन्द्रमथापि वा
उपदण्ड प्रमाणेन वेणुदण्डं विधीयते १६५
नवतालोत्तमं कुर्यात्सप्ततालन्तु मध्यमम्
षट्तालं पञ्चतालं वा कन्यसं पददण्डकम् १६६
यष्टिबन्धसमायुक्तं दर्भमालासमन्वितम्
अयसावलयं चापि बन्धयेदुपदण्डके १६७
कार्पाससूत्ररज्जुं वा लयद्विगुणमेव च
कनिष्ठाङ्गुळपरीणाहन्दष्टमूलमथाश्रितम् १६८
भूमिं संप्रोक्षणं कृत्वा खानयेत्पृथिवीन्ततः
त्रिहस्तन्तु प्रमाणेन द्विहस्तं खानयेत्क्रमात् १६९
दण्डस्य स्थापनं कुर्याच्छालितण्डुलकूर्मकम्
रत्नजं रजतं चैव कूर्मासनन्तु लोहजम् १७०
पञ्चलोहसमायुक्तं दण्डमूले तु योजयेत्
पुण्याहं वाचयेत्तत्र सुमुहूर्ते विचक्षणः १७१
वेदिलक्षणमेवोक्तं शिलां वाचेष्टिकामयम्
अथवा मूर्तिसङ्गाह्य त्रिमण्डलसमन्वितम् १७२
हस्तमानन्तु विस्तारं उत्सेधं हस्तमानकम्
रत्निमात्रसमुत्सेधं मुष्टिमात्रमथापि वा १७३
विस्तारसममुत्सेधं हस्तमानमधोत्तमम्

चतुर्विंशाङ्गुळं हस्तं मात्राङ्गुलेन कारयेत् १७४
वेदिका लक्षणं प्रोक्तन्दण्डमूले विचक्षणः
शिल्पिनं विसृजेद्धीमान् गोमयालेपनन्तथा १७५
कौतुकं बन्धयेत्तत्र दण्डमध्ये सुबन्धकम्
विनायकं पूजयेत्तत्र पुण्याहं वाचयेत्ततः १७६
अयसा वलयं रज्जुं द्विगुणं मूलमाश्रितम्
दर्भमाला समायुक्तं पुष्पमालाभिशोभितम् १७७
ध्वजपटं बन्धयेद्धीमान् किंकिणीपुष्पशोभितम्
वृषकुम्भन्तु मूर्तिस्स्याद्धूपदीपसमन्वितम् १७८
सुमुहूर्ते चयः कुर्याद्ध्वजारोहणमेव च
स्तोकस्तोकेन संयुक्तं वन्धयेत्तु दृढव्रतः १७९
विपरीतावरोहेण प्रायश्चित्तं विधीयते
शान्तिहोमं ततः कृत्वा पुनस्सन्धानमाचरेत् १८०
सर्वदेवतमावाह्य दण्डमूले तु योजयेत्
लोकपालान्समभ्यर्च्य दिक्तालं बन्धयेत्क्रमात् १८१
नृत्तगीतसमायुक्तं सर्वघोषसमन्वितम्
मुद्गान्नन्तु निवेद्यं स्यात् पयसान्नं निवेदयेत् १८२
नवपिण्डन्ततः कुर्यात् दिग्विदिक्षु क्रमेण तु
गर्भोत्पत्तिसमायुक्तं प्रथमं गव्यदापयेत् १८३
अमङ्गळ्य कन्यका चैव अपस्मारदृढन्तथा
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः १८४
शिवाग्रे मण्टपं कृत्वा गोमयेनानुलेपयेत्
उमा

सहितदेवस्य कौतुकं बन्धयेत्क्रमात्  १८५
स्वर्णं वा रजतं वापि अ्रथ कार्पासमेव वा
त्रियकेन मन्त्रेण रक्षाबन्धनकम् स्मृतम्  १८६
स्थलिकान्तरण्डुले चैव तन्मध्ये तन्तुरक्षकम्
परिचारकहस्तेन प्राकारे तु प्रदक्षिणम्  १८७
नववस्त्रसमायुक्तं सर्वदेवसमन्वितम्
सर्वस्याग्रे स्थितं कुर्यात्पुण्याहं वाचयेत्क्रमात्  १८८
गन्धपुष्पादिभिः पूज्यमघोरेण तु देशिकः
त्र्यंबकेन मन्त्रेण रक्षासूत्रं प्रबन्धयेत्  १८९
उमासहितमेवोक्तं चन्द्रशेखरमेव च
एकरूपं द्विबेरं वा त्रिबेरं वा विशेषतः  १९०
षोडशप्रतिमायां च कौतुकं बन्धयेत्क्रमात्
यागशालान्ततः कुर्यात्कूटं वा मण्टपन्तथा  १९१
ऐन्दे च पावके चाथ यमे वा राक्षसेऽपि वा
वायुसोमे तथेशान्यां यागमण्टपमेव च  १९२
मण्टपं समलं कृत्वा तन्मध्ये वेदिकां कुरु
रत्निमात्रसमुत्सेधन्दर्पणोदरसन्निभम्  १९३
हस्तद्वयसुविस्तारं उपवेदिसमायुतम्
नवाग्निमुत्तमञ्चैव पञ्चाग्निम्मध्यमं भवेत्  १९४
एकाग्निमधमं प्रोक्तं वृत्तं वा चतुरश्रकम्
एकाग्निं वाथ कर्तव्यं पूर्वे वा पश्चिमेऽपि वा  १९५
यद्वाराभिमुखं लिङ्गं तद्वारकुम्भपूजनम्
तदग्रे चाग्निकुण्डं वा गोमयेनोपलिप्य च  १९६
षोडशस्तम्भसम्युक्तं द्वादशस्तम्भमेव च
चतुस्तम्भसमायुक्तं चतुर्द्वारसमन्वितम्  १९७
युगतोरणसंयुक्तं दर्भमाला समन्वितम्

गात्रवेष्टनसम्युक्तं वितानध्वजसम्युतम् १९८
वेद्यान्तु स्थरिडलं कुर्यात् अष्टद्रोणैश्च शालिभिः
तदर्धं तरडुलं प्रोक्तं तदर्धकतिलैर्युतम् १९९
तन्मध्ये नळिनं लिख्य अष्टपत्रं सकर्णिकम्
मध्ये सदाशिवं कुम्भं वर्धनीं च तथोत्तरे २००
अष्टविद्येश्वराञ्चैव पूर्वादिक्रमतो न्यसेत्
शिवकुम्भं तथोद्धृत्य शिवमन्त्रमनुस्मरन् २०१
शिवशक्तिवर्धनीं पूज्य पराशक्तिसमन्वितम्
अष्टविद्येश्वरानेतान्स्वस्वनामसुमन्त्रकैः २०२
द्वारकुम्भं समारभ्य पूर्वादीशान्तमर्चयेत्
प्राक्भूतकुम्भं तथेकाग्निकुम्भम् दाक्षिरायवेदन्नैर्ऋत्यकाग्निम् २०३
वारुरायषट्कं तथाश्विन्य वायौ सोमयुग्मम्
स्यात्त्रिः कुम्भमीशे ------
तत्तत्स्वनाममन्त्रेण तत्तत्कुम्भान्समर्चयेत् २०४
सर्वदेवतमावाह्य गन्धपुष्पादिभिर्यजेत्
धूपदीपसमायुक्तं होमं कुर्याद्विचक्षणः २०५
पुरायाहं वाचयित्वा कौतुकं बन्धयेत्क्रमात्
कौतुकम्मग्निकुराडं च प्रत्येकन्तु विशेषतः २०६
कुराडसंस्कारमेवोक्तं निर्मलज्वालकन्तथा
अग्निकार्यविधिः प्रोक्तं प्रतिकुराडन्तु होमयेत् २०७
आचार्यश्शिष्यकैर्युक्तो होमं कुर्याद्विचक्षणः
पलाशोदुम्बरञ्चैव अपामार्गं च प्लक्षकम् २०८
बिल्वं च खादिरञ्चैव न्यग्रोधं वह्निमेव च
वैकङ्कतं च काश्मीरं समिधस्समुदाहृतम् २०९
परिस्तरेण दर्भाणां परिधित्रयमेव च
पूर्वे ऊर्ध्वं समिधो द्वयं विष्टरमेव च २१०

ब्रह्माणं दक्षिणेऽभ्यर्च्य उत्तरे तु जनार्दनम्
परिषेचनन्ततः कुर्यात्प्रोक्षणी पात्रकेन च २११
प्रणीता पात्रमादाय वैष्णवं पूजयेत्क्रमात्
आज्यसंस्कारकञ्चाथ हविस्संस्कारकन्तथा २१२
होमान्ते च बलिं चैव मेखलोपरि विन्यसेत्
तत्तत्स्वनाम मन्त्रेण लोकपालबलिं क्षिपेत्
बहिर्बलिविधिं कुर्यादन्तर्बलिमथाचरेत् २१३
कुण्डपार्श्वे पावकं च अन्तर्बहिबलिं क्षिपेत्
प्रथममष्टनागं च द्वितीयं द्वादशं रविम् २१४
नागादि बलिकं क्षिप्य पूर्णाहुतिमथाचरेत् २१५
अग्निमन्त्रमनुस्मृत्य अन्ते स्वाहेतियोजयेत्
अग्निमूर्तिं समावाह्य कुम्भमध्ये सुयोजयेत् २१६
हविर्निवेदयेत्तत्र सर्वदेवनिवेद्यकम्
होमान्ते भेरिघोषं स्यान्नवताळविधिर्भवेत् २१७
आहूयवाद्यकं पश्चादाचार्यं शिष्यमेव च
यागान्ते भेरिघोषं स्याद्वास्तुभूतबलिं क्षिपेत् २१८
प्रथममन्तर्बलिं कुर्याद्द्वितीयं दिनदेवता
ध्वजादिबलिपीठान्तं बलिभोज्यक्रमं श्रुणु २१९
उमास्कन्देश्वरं देवं ग्रामप्रदक्षिणन्तथा
रथे वा शिबिकायां वा स्थापयेद्देवमेव च २२०
शंखघोषसमायुक्तं ब्रह्मघोषसमन्वितम्
सर्ववाद्यसमायुक्तं श्रोत्रमङ्गळवाचकैः २२१
छत्रं च चामरं चैव व्यजनं ध्वजमेव च
धूपदीपसमायुक्तं यन्त्रदीपमनन्तरम् २२२
सर्वभक्तजनानान्तु नृपती ब्रह्ममेव च
आचार्यो दक्षिणे पार्श्वे नृपतिर्वामपार्श्वके २२३

मध्यमे रुद्रकन्यानां गान्धर्वन्तु शिवाग्रके
ग्रामप्रदक्षिणं कुर्यादास्थानमण्टपन्तथा २२४
पाद्यमाचमनीयं चार्घ्यं धूपदीपसमन्वितम्
आरात्रिमर्चयेद्धीमान् भस्मनान्दापयेद्बुधः २२५
दर्पणं चामरं चैव व्यजनं छत्रमेव च
भस्मसन्दापनं कुर्यान्नृपभक्तजनान्वितम् २२६
नाळिकेरसमायुक्तं पनसं कदळीफलम्
निवेदयेत्तदामन्त्री ताम्बूलेन समन्वितम् २२७
तद्दिनन्तु समारभ्य यज्ञं सप्तदिनं भवेत्
तद्दिनात्सप्तदिवसे तैलाभ्यङ्गनकर्मणि २२८
आस्थानमण्टपे कुर्याद्गोमया लेपिते शुभे
स्थण्डिलं तत्र कुर्वीताष्टद्रोणैश्च शालिभिः २२९
तन्मध्ये तैलकं स्थाप्य दूर्वाक्षतसमन्वितम्
पुण्याहं वाचयित्वा तु तैलं शिरोर्पणन्तथा २३०
दूर्वाक्षतसमायुक्तं मूर्ध्नि निक्षेपयेद्बुधः
अस्त्रभेर्यादि संयुक्तं तैलाभ्यञ्जनकन्तथा २३१
स्नपनं कारयित्वा तु पञ्चाचत्पंचविंशति
शुद्धवस्त्रपरीधानं श्वेतमाल्यविभूषितम् २३२
मुक्ताभरणसम्युक्तं श्वेतचन्दनलेपितम्
बहुनैवेद्यसम्युक्तं उपदंशसमन्वितम् २३३
ताम्बूलं च निवेद्याथ धूपदीपसमन्वितम्
आरात्रिकन्ततो दत्वा भस्मनान्दापयेद्बुधः २३४
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
सायं काले विशेषेण बलिहोमं विनाचरेत् २३५
पश्चाद्धोमबलिं कुर्यादस्त्रदेवसमन्वितम्
अन्नलिङ्गं बलिपात्रं चन्द्रशेखरमेव च २३६

रात्रौ तु वा बलिं कुर्यात्सर्वेषां बलिमाचरेत्
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति २३७
अष्टमे नवमे चैव गन्धोत्सवविधिक्रमम्
तद्दिनत्रितये चापि द्वितीये चाङ्कुरार्पणम् २३८
तद्दिनात्पूर्वरात्रौ तु कौतुकन्तु नटेश्वरे
भुजङ्गलळितं चैव भुजङ्गत्रासमेव च २३९
एतन्नृत्तमिदं प्रोक्तं स्नपनन्तत्र कारयेत्
शिवाग्रे मण्टपं कुर्यादास्थानमण्टपे तथा २४०
गोमयालेपिते शुद्धे स्थण्डिलं तत्र कारयेत्
अष्टद्रोणैश्च शालीनान्तदर्धतण्डुलेन च २४१
तदर्धतिलसम्युक्तन्देवाग्रे स्थण्डिलन्तथा
दर्भैः पुष्पैः परिस्तीर्य लाजपुष्पैश्च शोभितम् २४२
तन्मध्ये च त्रिपाद्यान्तु स्थलिकान्तण्डुलन्तथा
स्वर्णसूत्रं विशेषेण कार्पाससूत्रमेव च २४३
तन्मध्ये तन्तुसंयुक्तं भस्मचन्दनमेव च
लम्बकूर्चसमायुक्तं उपवीतसमन्वितम् २४४
परिचारकमूर्ध्ना च प्राकारस्य प्रदक्षिणम्
शङ्खदुन्दुभिनिर्घोषैः स्तोत्रमङ्गळवाचकैः २४५
देवसन्निधिमानाय्य पुण्याहं वाचयेत्क्रमात्
तदावा अग्निकार्यन्तु स्थण्डिलं सिकतैस्तथा २४६
सूत्रं पूर्वोत्तरेणैव ब्रह्मजज्ञानमन्त्रतः
नाकेसुपर्णमन्त्रेण दक्षिणे सूत्रमेव च २४७
आप्यायस्वेति मन्त्रेण उत्तरे लेखयेत्क्रमात्
यो रुद्रेति मन्त्रेण पूर्वरेखां समालिखेत् २४८
तन्मध्ये स्थापितं कृत्वा प्रदक्षिणमथाचरेत्
वागीश्वरं च वागीशीं तन्मन्त्रेणार्चयेत्क्रमात् २४९

उत्तरे आसनं कल्प्य प्रणीतां प्रोक्षणीं तथा
आज्यस्थालीं चरुस्थालीं सृक्सृवे साधयेत्क्रमात्  २५०
समित्त्रयसमायुक्तं परिधित्रयमेव च
प्रोक्षणीपात्रमादाय जलेन पूरितं क्रमात्  २५१
कुशपुष्पाक्षतैर्युक्तां प्रोक्षणीं साधयेत्क्रमात्
प्रणीता पात्रमादाय तोयपुष्पाक्षतैर्युतम्  २५२
उत्तरे चैव संस्थाप्य जनार्दनं समर्चयेत्
आज्यस्थाल्यां घृतं पूर्य त्रिस्पर्शनं सकूर्चकम्  २५३
कूर्चग्रन्थिं विसृज्याथ अग्निमध्ये स्थितं क्रमात्
आज्यसंस्कारदर्भाणां अग्निं दक्षिणके तथा  २५४
व्याहृतिं जुहुयात्तत्र ब्रह्मजज्ञानमन्त्रकैः
परिस्तरणं च दर्भाणां परिधि त्रयमेव च  २५५
पूर्वादि विष्टरं कल्प्य समिदाहुतिमाचरेत्
समिधस्सद्यमन्त्रेण आज्यं वामे न हूयते  २५६
अघोरेण चरुं हुत्वा लाजन्तत्पुरुषेण तु
तिलमीशान मन्त्रेण सर्षपं कवचेन तु  २५७
मुद्गमाषं च शालीनां नाममन्त्रेण हूयते
पयसा गुळखण्डं च शिवमन्त्रेण हूयते  २५८
प्रति प्रति तथा कुर्यात्पुनः पुण्याहमाचरेत्
त्र्यम्बकेन मन्त्रेण कौतुकन्तु नटेश्वरे  २५९
शक्त्यास्तु वामहस्ते च कौतुकं बन्धयेत्सुधीः
कौतुकमस्त्रदेवानां मृगं वाद्यन्तु कौतुकम्  २६०
धूदीपसमायुक्तमारात्रिकेन पूजयेत्
सुमुहूर्ते विशेषेण बन्धयेत्कौतुकं हृदा  २६१
ब्राह्मणान्भोजयेत्तत्र चतुर्वेदसमन्वितान्
नृत्तगीतं च वाद्यं च पुराणं कथितं क्रमात्  २६२

अपूपन्निवेदयेद्धीमान् बहुनैवेद्य सम्युतम्
निवेदयेत्ततो मन्त्री ताम्बूलेन समन्वितम्  २६३
धूपदीपसमायुक्तं आरात्रिकेन पूजयेत्
छत्रं च चामरं चैव दर्पणन्दर्शयेत्क्रमात्  २६४
भस्मशेषन्तु नृपति भक्तानान्दापयेत्क्रमात्
नववस्त्रैलंकृत्य कौतुकं पूर्ववत्क्रमात्  २६५
सर्वाभरणसंयुक्तं मुक्ताभरणभूषितम्
श्वेतपुष्पैरलङ्कृत्य श्वेतचन्दनलेपितम्  २६६
नीलोत्पलसमं पुष्पं न भूतन्न भविष्यति
स्थण्डिलप्रभसंयुक्तं बिम्बप्रभसमन्वितम्  २६७
हर्म प्रदक्षिणं कुर्यादास्थानमण्टपस्थितम्
धूपदीपसमायुक्तन्नीराञ्जनं विशेषतः  २६८
भस्मन्तु दापयित्वाथ छत्र चामरदर्शनम्
नृपभक्तजनानां च शेषभस्म च दापयेत्  २६९
प्रातःकाले समारभ्य गन्धोत्सवविधिक्रमम्
आचार्यस्नानमेवन्तु प्रतिस्नानं समाचरेत्  २६५
चित्रवस्त्रैरलंकृत्य सर्वाभरणभूषितम्
देवाग्रे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः  २६६
तन्मध्ये नळिनं लिख्य त्रिपादीन्तत्र विन्यसेत्
स्थालिकां तण्डुलैः पूर्य कृष्णगन्धसमन्वितम्  २६७
कस्तूरीञ्चैव कर्पूरं कृष्णगन्धविमिश्रितम्
शंखदुन्दुभिनिर्घोषैस्तोत्रमङ्गळवाचकैः  २६८
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्टपम्
देवस्य सन्निधिं प्राप्य होमं कृत्वा विशेषतः  २६९
पूर्ववद्वह्निकं स्थाप्य अग्निकार्योक्तमाचरेत्
पुण्याहं वाचयेद्धीमान् होमं कृत्वा विचक्षणः  २७०

सर्वगन्धसमायुक्तं कृष्णगन्धप्रदानकम्
होमान्ते कृष्णगन्धेन लेपयेत्तु नटेश्वरम् २७१
शक्तिं शिवसमं प्राप्य सुमुहूर्ते विचक्षणः
ब्राह्मणान्भोजयेत्तत्र स्वस्तिसूक्तसमन्वितान् २७२
अस्त्रदेवे च भेर्यां च सर्वदेवेषु दापयेत्
मूलबेरेषु गन्धं च परिवारसमन्वितम् २७३
यागेश्वराणां देवानां कृष्णगन्धं च दापयेत्
चतुर्वेदजपान्सर्वान्भूसुरान्भोजयेत्क्रमात् २७४
शुद्धनृत्तं विशेषेण गीतवाद्यसमन्वितम्
गेयं च दर्शनं प्राप्य कन्यादर्शनकन्तथा २७५
भेरीन्तु ताडयेत्तत्र आचार्य हस्तकेन च
गन्धद्वारेति मन्त्रेण ताडयेत्तु विशेषतः २७६
आहूय वाद्यकान्पश्चात् गन्धपुष्पन्तु दापयेत्
पुष्पाञ्जलिन्नमस्कृत्वा वाद्यकान्वदयेत्क्रमात् २७७
सप्तताळविधिं प्रोक्तमाचार्यश्शिष्यकैस्सह
नन्दिमन्त्रं समुच्चार्य मृदवाद्यन्तु ताडयेत् २७८
आचार्यस्ताडयेत्पूर्वं वाद्यकास्ताडयेत्क्रमात्
झर्झरी मुरवञ्चैव पटहं मद्दळन्तथा २७९
सर्ववाद्य समायुक्तमहाघोषसमन्वितम्
एवं सप्तविधं कुर्यान्महानाट्य समन्वितम् २८०
देवदेवन्नमस्कृत्वा पाद्याचमनमेव च
धूपदीपसमायुक्तन्नीराजनं विशेषतः २८१
भस्मं च दापयित्वाथ दर्पणन्दापयेत्क्रमात्
छत्रं च चामरं चैव व्यजनन्तु क्रमात्सुधीः २८२
शेषगन्धसमायुक्तं भूपतिश्च विशेषतः
सर्वभक्तजनानां च सर्वेषां गन्धमेव च २८३

महाहविर्निवेद्यं स्यात्ताम्बूलेन समन्वितम्
धूपदीपसमायुक्तमारात्रिकं च दापयेत् २८४
सर्वपुष्पैरलङ्कृत्य सर्वघोषसमन्वितम्
शङ्खनादसमायुक्तन्दुन्दुभिमद्दळान्वितम् २८५
पुष्पप्रभासमायुक्तं चित्रप्रभासमन्वितम्
रथे वा शिबिकायां वा चित्रदीपसमन्वितम् २८६
सप्तग्रहन्ततः कुर्यात्प्रविश्यास्थानमरणटपम्
पाद्यमाचमनम् चार्घ्यं धूपदीपसमन्वितम् २८७
नीराजनन्ततः कुर्याद्भस्मन्तु दापयेत्क्रमात्
नाळिकेरसमायुक्तं कदलीपनसन्तथा २८८
ताम्बूलन्दापयित्वा च दर्पणन्दर्शयेत्क्रमात्
छत्रं च चामरञ्चैव गीतवाद्यसमन्वितम् २८९
स्नपनं कारयित्वा च पश्चाच्च पञ्चविंशतिम्
स्नपनं च यथोक्तेन पूर्ववत्परिकल्पयेत् २९०
तालचूर्णं शक्रच्चूर्णं उदकं ग्राह्यबुद्धिमान्
अभिषेकन्तत्र कुर्वीत स्नपनं च यथाक्रमम् २९१
पुणयाहं वाचयेत्तत्र वेदध्वनि समायुतम्
शुक्लवस्त्रपरीधानं श्वेतमाल्यविभूषितम् २९२
श्वेतचन्दनसंयुक्तं कर्पूरेण विमिश्रितम्
श्वेतयज्ञोपवीतं च श्वेतवस्त्रोत्तरीयकम् २९३
हविर्निवेदयेद्धीमान्ताम्बूलेन समन्वितम्
शिबिकायान्ततः कृत्वा प्राकारे तु प्रदक्षिणम् २९४
शिवाग्रे मणटपं कुर्याद्विशेषस्नानमणटपम्
धूपदीपसमायुक्तमारात्रिकेन सम्युतम् २९५
पैशाचनृत्तसम्युक्तं महानाटकसम्युतम्
प्रातःकालं समारभ्य चित्रवस्त्रेण वेष्टितम् २९६

सर्वाभरणसंयुक्तं सर्वमाल्यविभूषितम्
सर्वमङ्गळवाद्यैश्च शङ्खकाहळमेव च २९७
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
आस्थानमण्टपे स्थाप्य धूपदीपसमन्वितम् २९८
आरात्रिकसमायुक्तं भस्मदत्त्वा विशेषतः
दर्पणं चामरं छत्रं व्यजनन्दर्शयेत्क्रमात् २९९
शेषभस्मततो दद्याद्भूपतेश्च विशेषतः
सर्वभक्तजनानां च भस्मदद्याद्यथाक्रमम् ३००
नाळिकेरसमायुक्तं पनसकदळीयुतम्
स्नानं कृत्वा यथान्यायं महाहविर्निवेदयेत् ३०१
मृगयात्रां समारभ्य पूर्वरात्राधिवासनम्
त्रिपुरघ्नं पृथक्कुर्यात्कल्याणसुन्दरन्तथा ३०२
वाजियन्त्रन्तदन्ते तु गच्छयन्त्रं गजस्तथा
दारुकैर्हन्यदच्छाया केचित्काले शिवोत्सवे ३०३
केचित्खड्गधराश्चैव केचित्परशुधरा तथा
परिघं यस्तथा सर्वे बहुधा धनशस्तथा ३०४
युद्धारम्भे तथासर्वे शीघ्रं गच्छेत्समाकुलम्
मृगपक्षिवराहश्च मयूरः कुक्कुटस्तथा ३०५
सर्वालङ्कारसम्युक्त वनयात्रासमन्वितम्
हेलालीलासकथितं गच्छेद्भक्तजनैर्युतम् ३०६
गौरी चण्डीशविघ्नेश महाकाळवृषास्तथा
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ३०७
प्रदोषकालसमये तीर्थाधिवासनन्तथा
शिवाग्रे मण्टपं कुर्यादष्टद्रोणैश्च शालिभिः ३०८
तन्मध्ये नळिनं कृत्वा त्रिपादीन्तत्र विन्यसेत्
स्थलिकान्तण्डुलैः पूर्य तन्मध्ये कौतुकं हृदा ३०९

उमास्कन्देश्वरं चैव अस्त्रदेवसमन्वितम्
भेरीदेवं समभ्यर्च्य चण्डेश प्रतिमान्तथा  ३१०
कौतुकं बन्धयेद्धीमान् उमास्कन्देश्वरन्तथा
पुण्याहं पूर्ववत्कृत्वा कौतुकं बन्धयेद्धृदा  ३११
त्र्यम्बकेन मन्त्रेण रक्षासूत्रं सुबन्धयेत्
अस्त्रस्य कौतुकं कुर्याद्भेरी कौतुकबन्धनम्  ३१२
नदीतटाक समुद्रेण अस्त्रतीर्थसमन्वितम्
सर्वदेवतमाह्वानं सप्ततीर्थसमन्वितम्  ३१३
स्थण्डिले तत्र कुर्वीत स्नपनन्नवकुम्भकम्
पुण्याहं वाचयेत्तत्र गन्धपुष्पसमन्वितम्  ३१४
सप्तताळविधिं कुर्यादाचार्यश्शिष्यकैर्युतः
स्नानं कृत्वास्त्रदेवेन सर्वभक्तजनैस्सह  ३१५
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
तीर्थाधिवासनं कृत्वा महातीर्थन्ततः श्रुणु  ३१६
प्रातःकालं समारभ्य अवभृथस्नानमुत्तमम्
प्रातःसन्ध्यावसाने तु यागादेवाचलिं क्रमात्  ३१७
ग्रामप्रदक्षिणं कृत्वा उमास्कन्देश्वरन्तथा
आस्थानमण्टपे स्थाप्य धूपदीपसमन्वितम्  ३१८
चूर्णोत्सवन्ततः कुर्यान्मण्टपाग्रे विशेषतः
गोमयालेपिते शुद्धे श्वेतचूर्णैरलंकृते  ३१९
तन्मध्ये स्थण्डिले कुर्याल्लूखलं मुसलेन तु
लूखलं ब्रह्मदेवत्यं मुसलं विष्णुदेवतम्  ३२०
वस्त्रदूर्वासमायुक्तं दर्भैः पुष्पैः परिस्तरेत्
रजनीद्रोणसंयुक्तं उलूखले चूर्णमेव च  ३२१
रुद्रकन्यासमायुक्तं स्नानं कृत्वा विशेषतः
त्रिपुण्ड्रभस्मसम्युक्तं श्वेतवस्त्रैरलङ्कृतम्  ३२२

धूपदीपसमायुक्तं पुष्पं हस्ते प्रदाप्य च
लूखलन्तु नमस्कृत्य रजनीचूर्णमेव च ३२३
शङ्खघोषसमायुक्तं सर्ववाद्यसमन्वितम्
रजन्यास्थलिकां पूर्य देवसन्निधिसम्युतम् ३२४
तैलदूर्वाक्षतान्पुष्पैः कूर्चमत्रेव विन्यसेत्
मङ्गळाङ्कुरमावृत्य सुमुहूर्ते विचक्षणः ३२५
पुण्याहं वाचयेत्तत्र घृतशिरोर्पणन्तथा
मूलदेवपरीवारतैलाभ्यङ्गनकर्मणि ३२६
उमास्कन्देश्वरं चैव अस्त्र भेर्योस्तु तैलकम्
दूर्वाङ्कुराक्षतैर्मूर्ध्नि अर्चयित्वा विशेषतः ३२७
धूपदीपसमायुक्तं आरात्रिकसमन्वितम्
भस्मदत्त्वा विशेषेण ताम्बूलेन समन्वितम् ३२८
दर्पणञ्चामरं चाथ व्यजनं चैव दापयेत्
ब्राह्मणान्भोजयेत्तत्र चतुर्वेदसमन्वितान् ३२९
प्रतिमामस्त्रदेवानां रजनी चूर्णकमस्त्रकम्
तैलारंभेषु सहसा चूर्णं कृत्वा विचक्षणः ३३०
तैलवस्त्रं चूर्णपात्रमस्त्रदेवसमन्वितम्
शङ्खघोषसमायुक्तं वास्तुदेवबलिक्रमम् ३३१
प्राकारे तु प्रदक्षिणम् शीघ्रं गच्छेत्समाकुलम्
भूपतिनासमायुक्तं महाजनसमन्वितम् ३३२
गानकैर्वाद्यनृत्तैश्च गणिकाभिस्समन्वितम्
सप्तताळविधिः प्रोक्तमाचार्यश्शिष्यकेन च ३३३
अस्त्रेण सहभक्तानां सहस्नानं विधीयते
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ३३४
मूलदेवस्य स्नपनं प्रतिमास्नपनन्तथा
यागेशं पूजयित्वा च पूर्णाहुतिमथाचरेत् ३३५

शिवकुम्भं ततोद्धृत्य आचार्यः परिचारकैः
धामप्रदक्षिणं कृत्वा शिवाग्रे मण्टपे तथा  ३३६
पुण्याहं वाचयेत्तत्र अभिषेकं च कारयेत्
वागीश्वरादि देवानां पीठबाह्ये प्रदक्षिणम्  ३३७
स्नपनन्तत्र कुर्वीत वस्त्रेण भोजनं कृतम्
उमास्कन्देश्वरस्यापि स्नपनन्तत्र कारयेत्  ३३८
अष्टोत्तरशतं श्रेष्ठं पञ्चाशत्पञ्चविंशति
देवाग्रे स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः  ३३९
पुण्याहं वाचयित्वाथ स्नपनस्थापनं चरेत्
शुद्धवस्त्रपरीधानं श्वेतमालाविभूषितम्  ३४०
बहुनैवेद्यसम्युक्तं ताम्बूलेन समन्वितम्
धूपदीपं समारोप्य नीराजनं विशेषतः  ३४१
मौनव्रतधरास्सर्वे ग्रामप्रदक्षिणन्तथा
लाजपुष्पं गृहीत्वा तु ब्राह्मणास्वस्तिवाचकैः  ३४२
आलयन्तु प्रविश्याथ आचार्यं पूजयेत्ततः
यागोपकरणसम्भारवस्त्रहेमाङ्गुळीयकैः  ३४३
ब्राह्मणान्भोजयेत्तत्र भक्तैश्च परिचारकैः
ध्वजदेवं समभ्यर्च्य मुद्गान्नन्तु निवेदयेत्  ३४४
अवरोहणन्ततः कुर्याच्छंखकाहळमद्दळैः
भेरी घोषसमायुक्तं सर्वालङ्कारमेव च  ३४५
प्राकारे च प्रदक्षिण्यं चण्डयागं समाचरेत्
चण्डेशस्थापनं युक्तं वस्त्राभरणसम्युतम्  ३४६
चण्डाग्रे होमसंयुक्तं अग्निकार्यमथाचरेत्
होमान्ते तु निवेद्यं स्यात्ताम्बूलेन समन्वितम्  ३४७
धूपदीपसमायुक्तमर्चयित्वा विशेषतः
अन्नलिङ्गसमायुक्तं बलिपात्रसमन्वितम्  ३४८

अस्त्रदेवं समादाय मौनं बलिमथाचरेत्
मौनव्रतधरास्सर्वे सन्धिदेवान्विसर्जयेत् ३४६
दीपहीनन्ततः कुर्यात्प्रहरे चैव घोषयेत्
ग्रामप्रदक्षिणं कुर्यान्महापीठे बलिं क्षिपेत् ३५०
पादप्रक्षाळनं कृत्वा प्रविशेदालयन्तथा
गौरीयागमहं वक्ष्ये पूर्वरात्राधिवासयेत् ३५१
साये चोत्सवमारभ्य उमास्कन्देश्वरन्तथा
ग्रामप्रदक्षिणं कृत्वा भक्तोत्सवन्ततश्चरेत् ३५२
सर्वलोकहितं पुण्यं सर्वराष्ट्रविवर्धनम्
सर्वदारिद्र्यशमनं राज्ञोविजयवर्धनम् ३५३
भोगमोक्षप्रदञ्चैव उत्सवं कथितं क्रमात् ३५४
इति योगजे क्रियापादे शिवोत्सवविधिर्नाम नवमः पटलः

आरब्धस्य क्रियाकाले दोषमुत्पद्यते तथा
उत्सवस्य विशेषेण प्रायश्चित्तं विधीयते १
छिन्नं भिन्नं च पतितं चोरग्रस्तादि सम्भवे
ध्वजस्य ध्वजदण्डस्य पटस्य च विशेषतः २
कृत्वा तत्पूर्ववत्सर्वं पुनरुत्थापनं कुरु
हृदयेन शतं हुत्वा स्नपनं पञ्चगव्यकैः ३
यागकालविहीनेन मूलमन्त्रशतं जपेत्
होमद्रव्यविहीने तु हृदयेन शताहुतिः ४
प्रतिमा पतने चैव ---- न्वति त्रिभिः
कृत्वा तु स्नपनन्तत्र मूलमन्त्रेण हूयते ५
प्रमादाछिन्नभिन्नानां स्कन्धानां पूर्ववत्क्रमात्
तिथिवारमुहूर्तानां कालपेक्षान्नकारयेत् ६
अधिवासनानि सर्वाणि सद्य एव तथाचरेत्

प्रतिदिक्कर्म सर्वेषां पूर्ववत्कारयेद्बुधः ७
कलहे रुधिरस्रावे अग्निदग्धे तथैव च
यागगृहे मण्टपे च तस्कराश्च रजस्वला ८
सूतका मृतिकास्पर्शदर्शने तु विशेषतः
पूर्वभाण्डान्विसृज्याथ नवभाण्डानि कल्पयेत् ९
शान्तिहोमन्ततः कृत्वा पञ्चगव्येन प्रोक्षयेत्
उत्सवादीनि कर्माणि एकाहं सुविहीनके १०
पूर्ववत्तु ध्वजारोहं पुनरुत्सवमाचरेत्
रुद्रकन्याश्च दास्यश्च भक्ताश्च वाद्यगेयकाः ११
पतिते व्याधि पीडे च मूत्रादिरुधिरस्रवैः
क्रियाकाले सम्भवश्चेत्पञ्चगव्येन प्रोक्षयेत् १२
पुण्याहं वाचयेत्तत्र अस्य नारी क्रियाभवेत्
वाद्यताळक्रियाकाले तत्काले छिन्नभिन्नकम् १३
पुनर्वाद्यं समारोप्य पवमानमुदीरयन् १४
इति योगजे क्रियापादे उत्सवप्रायश्चित्तविधिर्नाम दशमः पटलः

अथ वक्ष्ये विशेषेण पवित्रारोहणं परम्
पवित्रन्नामयत्प्रोक्तं शुद्धमित्यभिधीयते १
देवदानवगन्धर्वाः पिशाचा ब्रह्मराक्षसाः
सर्वे ऋषिगणाश्चैव क्षेत्रपालसमागुणाः २
सर्वेषान्तु प्रियार्थाय पवित्रारोहणं कुरु
आषाढे श्रावणे वापि कुर्याद्भाद्रपदेऽपि वा ३
आषाढे चोत्तमं प्रोक्तं श्रावणे मध्यमं तथा
भाद्रपदेऽधमं ज्ञेयं त्रिभिर्मासैः प्रकीर्तितम् ४
एषु मासेषु कर्तव्यं शुक्लाष्टम्यां विशेषतः
अथवा त्रयोदश्यन्तं ततोगन्धपवित्रकम् ५

उत्तमं हेमसूत्रन्तु मध्यमं रौप्यमेव च
अधमं तांम्रसूत्र तु अलाभे कार्पासमेव च ६
कुशं च वल्कलं चैव ऋषीणां समुदायतः
नेत्र पट्टोद्भवं चैव पद्मसूत्रन्तु चोत्तमम् ७
अलाभे कार्पासकेनैव तन्तुना बन्धनं कुरु
ब्राह्मणक्षत्रियो वैश्यशूद्रकन्याविनिर्मितम् ८
सूक्ष्मतन्तुं तथा कुर्याद्द्रोणदष्टन्तु वर्जयेत्
शुद्धोदकेन सम्प्रोक्ष्य क्षाळयेत्तु यथाविधि ९
मण्टपं समलङ्कृत्य देवाङ्गैश्च दुकूलकैः
पालिकां पूर्णकुम्भं च दर्पणं च विचित्रयेत् १०
अङ्कुराण्यर्पयेत्तत्र पूर्वोक्तविधिना सह
द्वादशं षोडशं चैव पञ्चविंशतिरेव च ११
पञ्चाशदशीतिकं चैव अष्टोत्तरशतन्तु वा
स्नपनद्रव्यसहितं स्थापयेद्विधिपूर्वकम् १२
सवस्त्रं सापिधानं च हेमरत्नसमन्वितम्
पूर्वोक्तविधिना चैव कलशस्थापनं चरेत् १३
पश्चाद्धोमं प्रकल्प्याथ कुण्डे वा स्थण्डिलेऽपि वा
समिदाज्य चरूँल्लाजान् सर्षपांश्च यवांतिलान् १४
होमद्रव्याणि सर्वाणि यथा क्रमेण हूयते
समिधस्सद्यमन्त्रेण आज्यं वामेन हूयते १५
अघोरेण चरुं हुत्वा लाजन्तत्पुरुषेण तु
ईशानेन यवं प्रोक्तं सर्षपं हृदयेन च १६
तिलं च शिरमन्त्रेण शिखया गुळमेव च
कवचेन तथा हुत्वा अपूपानामनेकधा १७
अक्षतैरस्त्रमन्त्रेण क्रमाद्धुत्वा विशेषतः
पुर्णान्तु मूलमन्त्रेण एवं होमं प्रकल्पयेत् १८

लिङ्गे वा कौतुके वापि शुद्धस्नानेन पूजयेत्
षोडशप्रतिमां चैव गन्धपुष्पादिभिर्यजेत् १९
स्थाने मराटपिकायां वा प्रतिमामर्चयेत्क्रमात्
उपदंशनैवेद्यं ताम्बूलं च निवेदयेत् २०
स्तोत्रमङ्गळपाठैश्च वेदाध्ययनघोषकैः
शङ्खभेर्यादिघोषैश्च जयशब्दादिभिस्तथा २१
गेयन्तत्र तु कर्तव्यम् पवित्रमधिवासयेत्
निद्रा भङ्गन्निशा कुर्यात्समाधिकृतयोगतः २२
पवित्राधिवासनं कुर्यात्पश्चात्तु विधिपूर्वकम्
अष्टोत्तरशतं कुर्यात्पञ्चाशत्पञ्चविंशतिः २३
उत्तमं मध्यमं चैव कन्यसञ्च प्रकीर्तितम्
मङ्गळार्थं प्रकर्तव्यं पञ्चविंशत्पवित्रकम् २४
द्वयाङ्गुळेन मानेन अथवा चाङ्गुलेन वा
बन्धनन्तत्र कुर्वीत तन्तुना बन्धयेत्क्रमात् २५
कुंकुमेन प्रलिप्याथ ----- हरिद्रया
ग्रन्धिबन्धन्ततः कृत्वा शास्त्रदृष्टेन कर्मणा २६
उशीरं हरिबेरं च तरङ्गन्नामपुष्पकम्
गन्धपत्रन्तु कच्चोलं एषां गन्धं विधीयते २७
ग्रन्धिबन्धन्ततः कुर्यात्सूत्रसङ्ख्यानुसङ्ख्यया
लिङ्गनाहप्रमाणं वा यमप्रमाणेन बन्धयेत् २८
गङ्गावतारचोष्णीषमेवं कुर्यात्प्रयत्नतः
हैमं वा राजतं पात्रं तांम्रं कांस्यमथापि वा २९
सर्वलक्षणसम्युक्तं विशालायतशोभनम्
तन्मध्ये तु निधातव्यं गन्धपुष्पादिनार्चयेत् ३०
परिधानन्तु कर्तव्यं नवं सर्वत्रसुव्रतम्
तस्योपरि न्यसेत्कूर्चं --- जपेत्क्रमात् ३१

एवं कृत्वाधिवासन्तु प्रातः काले समुद्धरेत्
शौचमाचमनं स्नानं सन्ध्यावन्दनमेव च ३२
पूर्वेद्युर्विधिना चैव देवन्यासन्तु कारयेत्
ईश्वरारोहणं सूत्रं चण्डेशाय निवेदयेत् ३३
अङ्कितकलशान्कृत्वा अर्चयित्वा विशेषतः
पुण्याहं वाचयित्वा तु स्वस्तिमङ्गळवाचकैः ३४
जयशब्दैर्गीतवाद्यै ब्रह्मघोषादि सम्युतम्
भेरीमृदङ्गपटहैः काहळैः कांस्यवाद्यकैः ३५
झल्लरी मद्दळैश्चैव कर्तरी ताळवंशकैः
शङ्खदुन्दुभिवाद्यैश्च सर्वालङ्कारशोभितम् ३६
नववस्त्रपरीधानश्शिरोवेष्टनमेव च
स्वर्णपुष्पशिरोयुक्तं स्वर्णयज्ञोपवीतकम् ३७
हेमाङ्गुळीय कटकैः कर्णकुण्डलशोभितम्
नववस्त्रपरीधानं शिरोवेष्टनमेव च
सर्वाभरणसम्युक्तं पुष्पमालासुशोभितम् ३८
एवमादीनि सर्वाणि आचार्यैस्समलङ्कृतम्
सायकानामलङ्कृत्य पवित्रमुद्धरेत्क्रमात् ३९
सर्वालङ्कारसम्युक्तमालयस्य प्रदक्षिणम्
ततो गर्भगृहं गत्वा रोपयेत्तु पवित्रकम् ४०
अर्चयित्वा विशेषेण धूपदीपसमन्वितम्
निर्गतं च तरं गेहमालयं सूत्रवेष्टनम् ४१
नैवेद्यन्तु प्रदातव्यं पायसान्नं विशेषतः
आचार्यं पूजयेत्तत्र यथावित्तानुसारतः ४२
साधकानां च सम्पूज्य भक्तांश्च पूजयेत्क्रमात्
परिचारकपूजैश्च ब्राह्मणान्भोजयेत्क्रमात् ४३
भूसुरान्भोजयेन्नित्यं यथाशक्त्यनुकूलतः

आगमन्तु समारभ्य शिवधर्मपुराणकैः ४४
पुराणवक्त्रात्सम्पूज्य देवयज्ञं च पूजयेत्
सर्वदेवान्समारोप्य परादीनि पवित्रकम् ४५
पवित्रारोहणं चैव भक्तांश्च परिचारकैः
जनान्सर्वान्प्रदातव्यम् कर्णिकान्सपवित्रकम् ४६
द्वादशाहं च अष्टाहं पञ्चाहं त्र्यहमेव च
पवित्रारोहणन्तत्र सन्ध्याकाले तु पूजयेत् ४७
--- ने पवित्रकान्त्यज्य पूजान्ते तु सुरोपयेत्
सदारोहन्ततः कुर्यात्सर्वालङ्कारसम्युतम् ४८
पूर्वपवित्रमादाय चण्डेशाय निवेदयेत्
स्नपनन्तत्र कुर्वीत गन्धपुष्पादिनार्चयेत् ४९
पश्चात्तपस्विनं पूज्य आच्छाद्येनं समाचरेत्
कौपीनमुत्तरासङ्गं योगिनान्तु प्रदापयेत् ५०
केशादिवपनन्दीक्षा संस्कारं च पवित्रकम्
सूचिकर्मादिरात्रं च दिनेष्वेतेषु वर्जयेत् ५१
मण्डलं वर्णयेत्पूर्वं लतालिङ्गोद्भवन्तु वा
पद्ममण्डलमेवं वा अर्धचन्द्रमथापि वा ५२
आचार्यस्य मनोभङ्गं पूजयेत्पूर्वरात्रके
मण्डलं पूजयेत्तत्र पूजा य सानकारके ५३
मण्टपं समलङ्कृत्य सर्वद्रव्याणि कारयेत्
दर्पणं चामरं चैव तालवृन्तं च चित्रिकाम् ५४
रोमरेखन्दन्तकाष्ठन्नखरोमादि छेदनम्
वस्त्रमाभरणं पात्रं भस्मधारं कमण्डलुम् ५५
पवित्रकर्मणि बद्धोदरबन्धं च माधारं कौपीनमेव च
अञ्जनेनैव पात्रेण अञ्जनन्त्ववलोकयोः ५६
योगपट्टं च दण्डं च मौञ्जी कृष्णाजिनन्तु वा

शुक्तिपात्रं पञ्चलोहं अष्टमङ्गळमायुधम् ५७
कूर्मासनं च सर्वेषां रोपयेन्मण्डलं कुरु
कृष्णं मृगं च परशुं भिक्षापात्रमयस्मृतम् ५८
दिव्यायुधन्दिव्यकटकम् सूर्यचन्द्रन्तु अग्निकम्
गङ्गाकेयूरमालां च अष्टरागविधैरपि ५९
रुद्रमालाशिरोमाला उष्णीषांसमालया
ललाटमाला कण्ठमाला कण्ठन्तु नाळबन्धकम् ६०
हृदादिलम्बमाला च नाभ्यन्तं मालया कुरु
जपमाला बाहुमाला कूर्परैर्हस्तमालया ६१
विविधैः पात्रमादाय मण्डलाग्रे तु विन्यसेत्
एवमेव क्रमेणैव द्रव्यं प्रति च स्थापयेत् ६२
पवित्रारोहणान्तं यावदादितस्संप्रपूजयेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ६३
पूर्वकृत्यं यथा कार्यं पवित्रारोहशुद्धये
देवियुक्तं यथा शास्त्रं शस्तं पवित्रारोहणम् ६४
इति योगजे क्रियापादे पवित्रारोपणन्नाम एकादशः पटलः

अथ वक्ष्ये विशेषेण मण्डलानां स्वरूपकम्
मण्टपस्य चतुर्भागमेकभागन्तु वेदिका १
तालमात्रसमुत्सेधन्दर्पणोदरसम्युतम्
पञ्चतालप्रमाणेन मध्ये मण्डलमालिखेत् २
अष्टाष्टपदमालिख्य बाह्यकोष्ठचतुष्टयम्
पद्मपीठं समालिख्य श्वेतं रक्तं च कृष्णकम् ३
पीतं श्यामं च सर्वेषां पद्ममालिख्य बुद्धिमान्
पद्मपीठस्य बाह्ये तु श्वेतवीथीं च कारयेत् ४
इदं रक्तं च वीथिं च रक्तश्यामं च कृष्णकम्

पीतञ्चैव तथान्यायञ्चतुर्द्वाराणि कल्पयेत् ५
द्वारार्धं मारकं कुर्यात्कराठोपकराठमुच्यते
कपोलं कपोलकं कुर्याद्ब्रह्मस्थानाद्बहिष्वथ ६
त्र्या दळेन वृद्धिस्स्यात्त्र्यङ्गुलादर्धचन्द्रकम्
त्र्यङ्गुलं पद्ममेवं स्यात्त्र्यङ्गुलं चैव स्वस्तिकम् ७
त्रयाङ्गुलं च श्रीवत्सं पादमानं चतुरंश्रकम्
श्वेतं रक्तं तथा पीतं कृष्णं श्यामन्तथान्यसेत् ८
पदं प्रति विपरीतं सर्वतो भद्रमिष्यते
शालिपिष्टेन श्वेतं च सिन्दूरं रक्तधातुकम् ९
हारिद्रं पीतचूर्णं स्यात्कृष्णं श्यामं च पञ्चकम्
दग्धली --- कृष्ण हिंस्यात्पादं प्रति कृतं प्रति १०
सर्वेषु मराडलं लिख्य क्रमात्तद्विपरीतकम्
एवं तु सर्वतो भद्रं लतालिङ्गोद्भवं श्रुणु ११
अष्टाष्टपदकं कृत्वा मध्ये पद्मं चतुष्पदम्
दळाष्टौ पञ्चवर्णेन लेखयेत्तु विशेषतः १२
पद्मं चतुरश्रविस्तारं कौशिकांशेन भाजयेत्
व्योमांशे कर्णिकां कुर्यात्पद्मांशेनैव केसरम् १३
शेषञ्च दळमारन्तु कर्णिकाधर्ममानतः
पद्मबाह्यांशकार्धे तु श्वेतवर्णेन वीथिकम् १४
वीथी समं चतुर्द्वारं शोभाद्वारसमाश्रितम्
तत्समाने कपोलन्तु शोभातुल्योपशोभितम् १५
ईशानादिषु चतुर्दिक्षु रक्तपिङ्गळश्वेतकम्
कृष्णचूर्णमिति प्रोक्तं कपोलात्तु विशेषतः १६
इन्द्रादिसोमपर्यन्तं चतुर्दिग्लिङ्गकल्पितम्
इन्द्रादिसोमपर्यन्तमष्टाविंशत्पदं भवेत् १७
लिङ्गार्थं कल्पयेद्धीमान्यथा सङ्ख्या पदं भवेत्

पीतवर्णं तथा कृष्णं श्वेतपीतं प्रकल्पयेत् १८
मध्ये रक्तसमायुक्तं पञ्चवर्णं प्रकल्पयेत्
कोणे कोणे चतुर्थन्तु विपरीतन्तु पूर्णयेत् १९
लतालिङ्गोद्भवं ह्येवं आचार्यमनसा कुरु
आचार्यमनोभवं वक्ष्ये शृणुष्वेकाग्रमानस २०
भूमिं समतलं कृत्वा दर्पणोदरसन्निभम्
प्रागग्रन्दशसूत्रन्तु उदगग्रन्तथैव च २१
मध्ये नवपदं पद्मं दळाष्टकेसरैर्युतम्
चतुर्दिक्षु नव भागं स्यात्प्रासादं कारयेद्बुधः २२
षड्वर्गकोशसम्युक्तं नासिकाद्यैरलङ्कृतम्
अष्टभागं समं कृत्वा प्रासादं पूर्ववत्प्रति २३
बन्धं पादबन्धं वा अष्टाने परिलिङ्गकृत्
लिङ्गपीठसमायुक्तं पादवर्ग --र्थ भागकम् २४
कोणे स्वस्तिकमित्युक्तं नवभागं विशेषतः
पञ्चचूर्णं पञ्चमुखं पुरुषादिविशेषतः २५
तन्मुखाभन्तु प्रासादं क्रमेणैव तु विन्यसेत्
वामादिशक्तयश्चाष्टौ परितः परिविन्यसेत् २६
पञ्चावरणमार्गेण पूजयेदर्चनां क्रमात्
षष्ट्याधिकं च त्रिशतैः परितो मण्डलं लिखेत् २७
एकैकं विपरीतं च पञ्चवर्णेन कल्पयेत्
कदळीफलमाम्रं फलं पनसं खण्डशर्करा २८
मण्डलं प्रतिविन्यस्य गन्धपुष्पादिनार्चयेत्
निष्कं वापि तदर्धं वा तदर्धार्धमथापि वा २९
कुर्यादुत्पलपुष्पन्तु मण्डलं प्रति विन्यसेत्
शतनिष्कादि एकान्तं यथालाभे तु पर्वतम् ३०
मण्डलात्पूर्वदिक्भागे स्वर्णपर्वतमिष्यते

वाचके रजताद्रिस्तु दक्षिणे ताम्रपर्वतम्  ३१
राक्षसे रक्तकन्नयस्य शालाद्रिं पश्चिमे न्यसेत्
------------- वायौ लवणपर्वतम्  ३२
सोमे च सर्षपाद्रिन्तु शाङ्करे च तिलाद्रिकम्
एवमुक्तानि सर्वाणि प्रत्येकं भारमेव वा  ३३
यथालाभं प्रकर्तव्यं पर्वतं च पृथक्पृथक्
पञ्चब्रह्मषडङ्गैश्च जयादिं होमयेद्बुधः  ३४
गन्धपुष्पादिभिः पूज्य स्वनामेनैव मन्त्रवित्
मण्डले चोत्तरे भागे स्थण्डिलं शालिभिः कुरु  ३५
तन्मध्ये रक्तवस्त्रन्तु शयनं कल्पयेद्बुधः
नेत्रबन्धन्ततः कुर्यान्नववस्त्रेण वेष्टयेत्  ३६
कौतुकं बन्धयेत्तत्र स्त्रीणां द्विनयनं कुरु
रात्रिहोमं तु कर्तव्यम् सर्वदेव हविर्ददेत्  ३७
--- द्विगुणन्देवस्य सर्वोपचारकं कुरु
प्रभाते विमले तत्र नेत्रबन्धं विसर्जयेत्  ३८
स्वर्णपुष्पं समारोप्य तन्नामन्तु प्रदापयेत्
स्नपनं कारयेद्देवे पञ्चाशत्पञ्चविंशतिः  ३९
अष्टोत्तरशतं वापि देवदेवे हविर्ददेत्
स्वर्णमङ्गळसूत्रन्तु नववस्त्रन्तु दापयेत्  ४०
प्रभूतहविषन्दत्त्वा देवदेवं प्रसादयेत्
सर्वदेवान्समभ्यर्च्य मण्डलं प्रतिदर्शयेत्  ४१
यागोपकरणं सर्वमाचार्याय प्रदापयेत्
घृतक्षीराभिषेकैश्च नाळिकेरन्तु दापयेत्  ४२
उमया स्कन्दसहितं प्रभूतं हविषन्ददेत्
ताम्बूलन्दापयेत्तत्र भक्तानां परिचारकैः  ४३
यथा शक्त्यर्चनन्तत्र भक्तानां परिचारकैः

भूसुरान्भोजयेत्तत्र ---रिकं ददेत् ४४
स्राचार्य --------------
शिवमन्त्रोपदेशं च स्राचार्यं पूजयेत्ततः ४५
स्राचार्यस्त्वग्रतो गच्छेत्स्वगृहं प्रविशेत्ततः ४६
इति योगजे क्रियापादे मराडलविधिर्नाम द्वादशः पटलः

स्रथातः संप्रवद्दयामि फलपाकविधिक्रमम्
दूरतश्शिखरं दृष्ट्वा यो नरः प्रणमेच्छिवम् १
मुच्यते सर्वपापेभ्यो निर्मोकादिवपन्नगाः
स्रारू मुरु विक्रान्त प्रादद्मिरायशिवालये २
तत्क्लेशान्तशिवामाया भवेत्पापविनाशनम्
जनैस्स्पृष्ट्वा तथा याया द्रुद्रलोके स जीवति ३
उत्सवे बलिकाले तु यो यः कुर्वन्प्रदद्मिराम्
पदे पदे श्वमेधस्य फलं प्राप्नोति मानवः ४
यथाकृत्वा नमस्कारं तथालोके तु पूजयेत्
जलं पुष्पं स्थलं पुष्पं देवमुद्दिश्य निद्मिपेत् ५
नानापुष्पैरलङ्कृत्य नानाभोगं समश्नुते
स्रारामन्देवदेवस्य यो नरः कृतवान्भुवि ६
एवं स धनवान्श्रीमानिहलोके सुपूजितः
तं योगं श्रोत्रिये वेदपारगे --- ७
गोश्शृङ्गेनाथकन्देवं द्मीरेण स्नाप्य
कपिला पञ्चगव्येन कुशवारियुतेन च ८
स्नापयेद्देवदेवेशं कोटिदानफलं समम्
नवधास्नापनं कुर्वन्यो नरो भक्तिसम्युतः १०
नानाभोगानि भुजित्वा शिवलोके महीयते
नवमार्गेऽपि यत्कर्म भोगोऽपि नवधा भवेत् ११

नवधा हविषं कृत्वा फलन्तद्गुरुलाघवम्
धूपघराटान्तु यो दद्यादभ्रे नी भूतिशिष्यते १२
वस्त्रारायाभरणादीनि देवदेवस्य दापयेत्
नानावस्त्रैश्च सम्पूर्ण नानाचाभरणैस्तथा १३
अर्जितस्त्विह लोके तु तच्छक्तिभिर्विशेषतः
भूमीं गोकर्णमात्रान्तु उमापाये चलात्मकम् १४
ग्रामाणामधिपस्सोपि विशेषात्पूजितस्त्विह
देवदेवस्य मभितः प्रश्नव्यामे कुरूत्भवेत् १५
दीपन्तु देवदेवस्य सकृत्काले प्रदापयेत्
तस्मादतिशयं स्वर्गन्तत्फलं महदाप्नुयात् १६
तत्समन्नद्मते येन सप्तजन्मानयिष्यति
इति काशैललोहैश्च साधनं कुरुते नरः १७
काञ्चनेन विमानेन शिवलोके महीयते
संसिद्धेन विमानेन स्थापितं विधिमार्गतः १८
शिवलोकमवाप्नोति पूज्यमानस्सचामरैः
शिवलिङ्गे कृते पश्चात्फलं सामीप्यमाप्नुयात् १९
यद्रूपं स्थापितं बिंबं तद्रूपोऽथ भविष्यति
शिवयज्ञे समाप्ते तु प्रयुक्तायमथार्चने २०
एकविंशद्गुरूणां च तथास्यैव च वंशिनाम्
दशपूर्वं समिच्छन्ति समासनदशापरात् २१
मातृपक्षे प्रसूतीनां तल्लोके स्थानमिष्यते
शुश्रूषकाणान्तरा पुत्रभ्रातृकळत्रकैः २२
शिवलोके तु वासस्यात्सर्वदेवपति प्रति
ततो हुत्वा तु विपुलान्प्रळये समुपस्थिते २३
ध्यानयोगं समासाद्य तत्रैव च विमुच्यते
प्राकारमराटपान्कुर्वन्तथा स्वर्गमवाप्नुयात् २४

वापीकूपतटाकानि देवायोद्दिश्य यत्नतः
कुर्वन्बहुविधानस्य सोन्ते शिवमवाप्नुयात् २५
तत्रापि भूतये चैव तस्य स्वर्गन्नसंशयः
आसनासनि सत्भावं ज्ञात्वा सम्पूजयच्छिवम् २६
सालोकञ्चैव सामीप्यं सारूप्यं चैव एव हि
सायुज्यं हि चतुर्थं स्यादुत्तमम्मध्यमाधमम् २७
मध्ये स्तम्भचतुष्केन धर्मज्ञानादि दैवतम्
बाह्ये द्वादशस्तम्भानां द्वादशादित्य दैवतम् २८
बाह्यानां विंशतीनां च स्तम्भानां वसवोश्विनौ
विद्येश्वरं च विश्वौ च विश्वस्तम्भस्य देवताः २९
दर्भमालाभिरावेष्ट्य पुष्पमालयैरलङ्कृतम्
तरङ्गपटमावेष्ट्य स्तम्भानां चपि वेष्टितम् ३०
वितानैरूर्ध्वमाछाद्य नेत्रपट्टैरलङ्कृतम्
नाळिकेरफलैः पुष्पै मुक्तादामैरलङ्कृतम् ३१
अश्वत्थ रक्तपर्णैश्च अपूपैरुपशोभितम्
गन्धपुष्पसमायुक्तं धूपदीपैरलङ्कृतम् ३२
गोमयालेपनं कृत्वा प्रोक्षयेद्भूतलं प्रति
अङ्कुराण्यर्चयेत्पूर्वं पूर्वनृत्तं यथाक्रमम् ३३
एवन्तु मण्टपं प्रोक्तं नृत्तकालं श्रुणुष्वहि
नित्यस्नाने समानृत्तं अर्चनान्तन्तथैव च ३४
क्षीरस्नाने घृतस्नाने मधुस्नाने जलेऽपि वा
अन्यपुण्यदिने वापि यत्तन्नृत्तं समाचरेत् ३५
नृत्तस्य प्रथमात्पूर्वे नारीणान्दीक्षणं कुरु
गान्धर्वप्रथमारम्भे दीक्षितप्रथमावहि ३६
नर्तको मर्दकश्चैव गायको वंशकस्तथा
मौकेवा रुद्रनारीणां शिवदीक्षां करोति हि ३७

सर्वलक्षणसम्युक्तं सर्वाभरणभूषितम्
एभिस्तु लक्षणैर्युक्तं शुद्धनृत्तं समाचरेत्  ३८
हीनाङ्गोनधिकाङ्गश्च बालवृद्धौ तथैव च
सरोगी विकटाङ्गश्च क्षयकुष्ठादि वर्जितः  ३९
अपेयपानी पाषण्डी वामाचारान्निवर्जयेत्
इत्येवं लक्षणैयुक्ता पुंसामपि विवर्जयेत्  ४०
अङ्गाल्याय समायुक्तं हस्ताल्प्याय समन्वितम्
अभिध्याय समायुक्तं ताळवित्ताळसम्युतम्  ४१
सर्वालङ्कारसंयुक्तं शुद्धनृत्तं सगेयकम्
एतल्लक्षणसम्युक्तं गान्धर्वं समुदाहृतम्  ४२
न दीक्षितेन यो नृत्तं दोषमेवं प्रकीर्तितम्
तद्दोषशमनार्थाय स्नपनं पञ्चविंशतिः  ४३
लिङ्गे वा कौतुके वापि गन्धपुष्पादिनार्चयेत्
शुद्धनृत्तदिनात्पूर्वं निशायामधिवासयेत्  ४४
मण्टपस्योत्तरे देशे स्थण्डिलं शालिभिः कुरु
शयनं कल्पयेत्तत्र अजातीनि प्रकल्पयेत्  ४५
तन्मध्ये रुद्रनारीणां मामेष्ट्याहत वस्त्रतः
शाययेत्कौतुकं बध्वा स्वर्णसूत्रन्तु सूत्रयेत्  ४६
नर्तको मर्दकश्चैव गायको वंशकस्तथा
मौनको वाद्यकश्चैव निशायामधिवासयेत्  ४७
स्थण्डिलन्तत्र कुर्वीत चतुर्द्रोणैश्च शालिभिः
तदर्धतण्डुलैश्चैव तदर्धैश्च तिलैरपि  ४८
नवभिः कलशान्स्थाप्य नवशक्तिसमन्वितान्
सकूर्चान्सापिधानांश्च सवस्त्रैः पल्लवैर्युतम्  ४९
गन्धपुष्पादिनाभ्यर्च्य धूपदीपसमन्वितम्
प्रातःकाले समुद्धृत्य शौचाचमनपूर्वकम्  ५०

दन्तशुद्धिसमायुक्तं स्नानं कुर्याद्विशेषतः
नवभिः कलशैः स्नाप्य दीक्षामन्त्रमनुस्मरन् ५१
गन्धपुष्पादिनाभ्यर्च्य वस्त्रमाभरणन्ददेत्
हृदयेन तु मन्त्रेण पुष्पं शिरसि विन्यसेत् ५२
हस्ते पुष्पं विनिक्षिप्य पुष्पं च पतिते यथा
तन्नामं वाचयेन्नित्यं रुद्रनारी यथाक्रमम् ५३
पश्चात्प्रदक्षिणं कुर्यादालयन्तु प्रवेशयेत्
विघ्नेशं च नमस्कृत्वा फलपुष्पहविर्ददेत् ५४
गङ्गां सरस्वतीं चैव श्रीदेवीं च समर्चयेत्
गन्धपुष्पहविर्दत्वा ताम्बूलं च प्रदापयेत् ५५
मध्याह्ने पायसानान्तु रुद्रनार्यस्सुशोभनम्
ततः प्रकरणन्नारीणां प्रविशेन्मण्टपं प्रति ५६
ईशानादि समारभ्य वास्तुदेवान्सुपूजयेत्
सायंकाले बलिन्दद्यान्मण्टपस्यापि देवता ५७
मण्टपस्य तु तन्मध्ये स्थण्डिलं शालिभिः कुरु
तन्मध्ये मुखं स्थाप्य गन्धपुष्पादिभिर्यजेत् ५८
आच्छाद्याहतवस्त्रेण हविष्यन्तु प्रदापयेत्
नन्दिकेश्वरमभ्यर्च्य गन्धपुष्पादिभिः क्रमात् ५९
प्रथममात्मशुद्धिश्च द्वितीयं कारुशोधनम्
तृतीयं वंशताळाख्यं ओंकारं गणमुदाहृतम् ६०
चतुर्थं गानशुद्धिश्च पञ्चमम्मुरवाद्यकम्
षष्ठकं वाद्यकैर्युक्तं सप्तमं पुष्पमोक्षकम् ६१
अष्टमं मणिबन्धं च नवमं रम्भां च भावनम्
दशमन्नृत्तसम्पूर्णमित्येते नृत्तलक्षणम् ६२
देवस्य दक्षिणे भागे देशिकस्सुखमास्थितः
देवस्य उत्तरे देशे नृत्तस्य सुतिमास्थितौ ६३

देवस्य पश्चिमे भागे परिचारकसुस्थितः
नर्तको मर्दकश्चैव दक्षिणेन तु संस्थितौ ६४
गायको वंशकश्चैव उत्तरेण तु संस्थितौ
उभयोः पार्श्वयोश्चैव रुद्रकार्यस्तु संस्थिताः ६५
मृदङ्गादिमहाशब्दं पूर्वायान्दिशिसंस्थितम्
अन्ये भक्तजनाश्चैव तद्बाह्येन तु संस्थितः ६६
नीराजनं पूर्ववत्कृत्वा स्तोत्रमङ्गळवाचकैः
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुळीयकैः ६७
नर्तकं मर्दकं पूज्य शुद्धहेमन्तु निष्ककम्
गायकं वंशकं पूज्य वस्त्रहेमाङ्गुळीयकैः ६८
तन्मर्दको रवैश्चैव युग्मवस्त्रं प्रदापयेत्
एतेषामन्यजातीनां ताम्बूलं च निवेदयेत् ६९
गेयाद्वाद्यसमुत्पत्तिर्वाद्यात्ताळसमुद्भवम्
ताळान्नृत्तं समुत्पन्नं इत्येवमुद्भवं स्मृतम् ७०
रङ्गे तु वर्तते नृत्तं हस्ताकृतेश्च निर्णयम्
चक्षुर्भ्यां भावयेद्भावं पादन्ताळसमाश्रयम् ७१
शिरोहस्तकटीषु जठरं पार्श्वसम्युतम्
अङ्गप्रत्यङ्गसम्युक्तं षडैते नृत्तलक्षणम् ७२
लयताळसमायोगे चारुनृत्तं प्रकल्पयेत्
गेये हीने ह्यनावृष्टिर्वाद्यहीने धनक्षयम् ७३
नृत्तहीने तु दारिद्र्यन्ताळहीने भयङ्करम्
बिन्दुनादस्वरैः पूर्णे वेष्टिते नाभिमूलकम् ७४
हृदयं वापि तन्मुक्तिर्गळैर्दन्तैश्च जिह्वया
शुक्लश्शोणितयोर्मध्ये बिन्दुरूपं परात्परम् ७५
सरिगमपदनिसा सप्तस्वरमिति प्रोक्तं सकळे तु विधिक्रमम्
षड्जषड्भागगान्धारं मध्यमं पञ्चदैवतम् ७६

निषादन्निष्कळं चैव गान्धारं सकलस्य तु
निष्कळस्य --- माधारस्सकळं भवेत् ७७
सकळं शक्तिरूपस्यान्निष्कळं जीवरूपकम्
स्वरस्य प्राणमाधारं प्राणवायुसमं भवेत् ७८
पद्मनाळन्ततो वायु पूतिकारेण सम्युतम्
यथाकाशस्तथा वायुस्तत्प्रमाणं स्वरं भवेत् ७९
स्वकारणं प्राणमित्याहुरकारञ्चानलन्तथा
द्वयोरक्षरयोर्योगं स्वरस्य उपलभ्यते ८०
अकारादिविसर्गान्तं बीजान्तं षोडशाक्षरम्
व्यञ्जना सादिकादिञ्च विस्तारं श्रुतिरेव च ८१
करणं कम्पितञ्चैव खकारोलळितन्तथा
इत्येकता हिता लोको चतुर्थं मराळमुच्यते ८२
सप्तस्वरत्रयोग्राम एकविंशतिकूजया
अक्षराणान्निभं कृत्वा वर्णगानि निगाचका ८३
स्वामिनं श्रुतिकारं च सप्तस्वरविभूषितम्
सौग्रामे वर्तमानं च शुद्धषाडिव सम्युतम् ८४
एतेषां लक्षणैर्युक्तं वंशकानां विशेषतः
अष्टमेवगुरुं पूर्वं मध्यमं लघुषोडशम् ८५
परोपि द्वात्रिंशद्बिन्दुकार्यक्षिप्तिकाञ्चयः
ध्रुवं का अपि सर्पाणयानिष्यं बद्धापि सज्ञनम् ८६
इति ख्याति पताकाश्च पतिता चाष्टमेव च
तक्करागस्य पञ्चम्या मिळा माळदकौशिकम् ८७
गान्धारं च मथा कुम्भमित्येते रागषड्विधम्
उत्सवानां परिचारी मदचारिं गजारिका ८८
महाचारिक इत्येते चतुर्धा नामतः स्मृताः
ध्रुवाक्षिपलकञ्चैव वर्धमानत्रयन्तथा ८९

मराडलं कुरिडतञ्चैव विके पेन्नितमेव च
स्रावेष्टितो वेष्टितं च उर्वेष्टितन्तु मेव च ९०
--स्तपादन्दराडपादं पुष्पमञ्जलिमेव च
भ्रमरी रसवारी च करणं चाङ्गहारिका ९१
सप्रकारी रसञ्चैकटकं कुराडलमेव च
सात्विक दृष्टिसम्युक्तं शुद्धनृत्तं विधीयते ९२
भूतप्रेतपिशाचैश्च स्रसुरो गणराक्षसः
नृत्ताक्षिप्ति बहुश्शब्दश्श्रोत्रं गच्छेज्जयावहम् ९३
गानश्रोत्रगतञ्चैव सहगच्छति बार्हता
लोकशान्तिकरं ह्येवं राजराष्ट्रविवर्धनम् ९४
स्थानवृद्धिं च मेवोक्तं धनधान्य विवर्धनम्
स्रथवक्रमधनं वप्र भङ्गपिङ्गळ जटामकुटम् ९५
पीतं गङ्गबगङ्गां बुजानार्थ विधनमार्द्रचर्मधारम्
त्रिदशदेवासुरगणवन्दितचरणं प्रणदयाङ्कुरणं सर्व ९६
लोकशरणार्ति विनाशनं वैद्यनाथशरणनृत्तक्षिप्तं सितवृषगतिम् ।
सितभस्मधरं सितगङ्गाजलधौत जटम् ९७
सित शशि भाग कृतोत्तरणं सित खड्गं चाङ्गीकृतचन्द्रधराय नमस्ते
।
मराटपञ्चप्रवेशिकैः ९८
देवस्याग्रे विशेषेण मराटपञ्चतुरश्रकम्
तस्मिन्गात्रलवे सुबालां वै बहुविन्यसेत्
पाणिना क्षाळनं कृत्वा पुष्पाञ्जलि समुद्रया ९९
नीरोगास्ससहानृत्तै नृत्ताक्षिप्ति समन्वितम्
वर्तभ्रमरपक्षविप्रं प्रभाणैस्सम्महोखरसम् १००
मन्दं जलिरेषरङ्गैसिद्धिं व्रतं च या मेक चतुर्विधम्
म्मुखं स्यात्कुञ्चितौ मणिबन्धौ च हस्ताद्यात्परि वर्जितौ ।

ग्रर्धं चोर्ध्वनि वाद्यैश्च वर्तनं कमलं भवेत् ।
मधुमत भ्रमरी गीतखैपरभूत गळोयमसद्यावनेत्र युग्मनसा ।
व्रतगन्धवनं पते प्रविशति वनमिव सुकरणी प्रोवेशिकैः ।
लीलाविलासिनी चितया करुणं लोला वलोलन वन्ये बिम्बं
कमला कुरु द्रपवने शुकोक्ते रपिनं प्रवेशति मनागते ध्रुवैः ॥
मन्दारपुष्प परिपूर्ण विचित्रगन्धैः
मुक्ताळिवृन्द मधुरध्वनि गीतियुक्तैः ।
नानाभरणकरणाञ्चित दृष्टि पातैः
पुष्पाञ्जलिं हरतु कमलासनस्थः १०५
पुष्पाञ्जलिः ॥
जय गङ्गाधर जय शशि शेखर जय खट्वाङ्गधर ॥
जय नरशिरः कपालमालाधर जयत्रिपुरान्तक
जयत्रिभुवनवनवन्दित चरण जयसित परवृष
गमन जय जय व्याधिविनाशन देव वैद्यनाथ
चरण नैक्रमाणां गङ्गाधर शुद्धकमलाकर
कमल चयनिलये कमलासन सहिते कमल-
वन्दित सितासित नयने शतवाद्य निरतै
गुणागुणनिलये सुखन्दित निमिते वन्दितया
करणे देवी सरस्वती वरगुण वरणो जयगणपति
सहिते विभतवननिव वर्गानतळैरनारागणमज्वालिते
रहामनेनळिः तत्र करले शशिनं भवोल्लळिते प्रावेशिकैः ।
पवनशिथिलिगिलितते भ्रमरगणे
मिथुनगीतखे कोत्र खकोकिल मुखकळिते
प्रविशति परमिव सुरकिरणी नृत्ताद्विप्त
मनमुदित मधुरविकल भ्रममुदित किन्नभीतखे
विरहामर मन्दरगमनागते प्रविशति गजपति

गिरिशेखरे श्रलैः पुन्नागचन्दन सरोरुह वल्लिजालैः मर्त्ताळिता
योगवकुळोत्पल कर्णिकारैः ।
नानाविचित्रकरणान्वित दृष्टि पातैः पुष्पाञ्जलिं हरतु मे
कमलासनस्थः ॥ पुष्पाञ्जलिः ११५
सरथ विकृतगदूरधीर पटन शिरोलोकपालधरम्
बद्धकन्दर्पविनाशकरं प्रणमत भैरवरूपम् ११६
नैष्क्रामणं पञ्चशुद्धिं देवन्दिव्यकपालं त्रिशूल
धरं जकङ्काळमाभरणं शशाङ्कशेखरमुपाध्याय
रूपधरं वासुकि फणामणि भैरवरूपं रुद्रमेका-
क्षरम् गुरुं देवं त्रैलोक्य वन्दित नमोस्तु ते ११८
प्रावीश्च शकै गुरुं जमळाञ्जन भस्मकरं विषधर
दर्पविनाशकरम् तदवधि नाशकरम्मरण विना-
शन धरणि तरम् । प्रणमत केशव पुनीतहरम्
नृत्ताक्षिप्ति माला सुरेषु मधुदर्पहरगोवर्धनं क्षिप्त
जनोद्धरणं दृष्टवासरस्य सितभस्मकरम् त्रैलोक्य
नाथ महं शिरसा धूपैः तत्पुष्पपङ्कज सरोरुह
पङ्कजातैः मत्त भ्रमद्भ्रमर कर्णिक कृत्तिकारैः ॥
सादृष्टियोग परिमण्डल दृष्टिपातैः पुष्पाञ्जलिं
हरतु मे कमलासनस्थः ॥ पुष्पाञ्जलिः ॥
मत्स्यकूर्मवराहनारसिंह भ्रुकुटितममकुटिकम्
समहासुरदेव विनाश देव दानव त्रिपुरहरमाक्षिप्त
जल भवनहुताशन दिव्यं शाङ्करकुक्षिकरम् । अजरं
परमानन्दपरमं विष्णुजयं पवनम् नैष्कामिकरं
तर्करागं अर्धशशाङ्क धराय नमो दिव्यगजेन्द्र
पटाय नमो नागकृताभरणाय नमो १२५
देव्युमासहिताय नमो प्रवेशिकैः भस्मवरनिमित

वियतकुनिकर वियतकुनिकर भ्रमणमथन
गीतरवेण तन्मन्दमावेशति वरमिव सुरकरहि-
वनमुदित मथरविकुळित पवनशिथिलित तरुण-
तरुवाते अ्रळिपुळितेक निवनर चरणगते गगनं
गगनं प्रविशति परकिरणी पवते ध्रुवैः
प्रोत्फुल्लकर्णिकुसुमादिविशेषगन्धैः भृङ्गारवै-
र्वकुळिते कृतवन्दनाद्यैः हस्तापि तत्र परिपूर्ण
सुदृष्टिपातैः पुष्पाञ्जलिं हरतु मे कमलासनस्थः ॥ पुष्पाञ्जलिः
भुजगेन्द्राखकर लळित । ध्वकृत
मधनं परवृषगमनं यदिप्रिय दहनम्मृगपति १३०
कृतवसन शशिखण्डमण्डित जटा मकुटार्ध वासुदेव ।
कृतपति चरणं पूजामिथुन वरवदन देविगुरुसततम् १३१
नैष्क्रामणं कौशिकशुद्धिं दिवसकरसम्पुरुषो शिशु चिर-
चिरत पितनज गम्भीरतर सहित विदिबेरम् १३२
पशुपति पानचरणो हतहरं प्रवेशिकैः
मलय सुगन्धारमाणवने भ्रमरदळभिधवर्णेनाहधे १३३
ये मदशन शाहतिखान्नरमाणो प्रवित्री करणी -- रयै
नृत्ताद्दिप्तिः कमलसुरमण्डमकुटच्छत चरण कमलयुगे १३४
षीमुनि सिद्धवर सुरसेविता चरणं भुवनत्रयमहिते
सिद्धान्तमन्देवता द्योते वलये हरचरणसंस्तुते १३५
योगिनमित योगित निमित नमो हृ वै चित्र्यादिके
कृत सरोरुह पारिजातै दिव्याळिबृन्दपरिपङ्कज १३६
रेत सूक्तं हस्तावियोग परिवर्तनदृष्टिपातैः
पुष्पाञ्जलिं हरतु मे कमलासनस्थः । पुष्पाञ्जलिः १३७
मत्स्यकूर्मवराहश्च नारसिंह भ्रुकुटीतटमकुटक ।
समहासुर देवविनाशन्दानदा त्रिपुरहतमाद्दिप्त १३८

जल भवनहुताशि दिव्यशाक कुद्विरं परमानिन्दितपरमं ।
विजयं पवनं नैष्क्रामि करं तर्करागं अर्धनारि १३९
शशाङ्क धराय नमो दिव्य गजेन्द्रपाय नमो नागकृता-
भरणाय नमो देव्युमासहिताय नमो प्रवेशिकैः १४०
शिखर परि शिखरकृत निलयं गीतमयापि श्रुते प्रणमत
केशवरदुरित हरदानव गजत्रिपुरं हरं नृत्ताद्विप्तिः १४१
मय सम्मृगपति सुरसि वमळे विकसित तरुवर
प्रहसतचरणं पङ्कज वकुळप्रियमरहारमदान्ध १४२
गते प्रविशति जगपतिवर्जिवनेद्ध्रुवैः
सावरिजाकोकोत्पल कीर्ति नीलैर्विशेषमधुमाळि १४३
बृन्दशोभैः आलीलमण्डलसरोरुहदृष्टिपातैः
पुष्पाञ्जलिं हरतु मे कमलासनस्थः पुष्पाञ्जलिः १४४
एकरूपविरूपमनेकाकार पञ्चस्थानमणिके शूद्र
वर्तिका वन्दित चरण मजमत्स्य बहु मगकरादि दानवा- १४५
र्चितं वादशम्भो यागमयं प्रणमतेस्मिन्शिवरूपम्
ऋषिकुलसकलकरण्डं चिन्ताबेरवरदं नैष्क्रामणम् १४६
उत्थापनैः आवेशिन्तु आद्विप्य परीवर्तकेना नन्दित-
स्य श्रुवायोगं रङ्गद्वारि च सञ्चारि च पुष्पमोद्म १४७
महाचारी शशैकमणात्
अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिक्रमम् १४८
प्रातः काले दिनान्ते च गेयनृत्तविहीनके
मध्याह्ने अर्चना काले द्विगुणन्नृत्तमाचरेत् १४९
द्विसन्धिन्नृत्तहीने तु सायंकालार्चनान्तकम्
नृत्तगेयं समारभ्य नृत्तगेयं समाचरेत् १५०
एकाहन्नृत्तहीने तु स्नपनं पञ्चविंशति
शान्तिहोमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा १५१

प्रभूतहविषन्दत्वा ताम्बूलं च प्रदापयेत्
द्वियहं त्र्यहं वापि चतुर्थं पञ्चकन्तथा १५२
सप्ताहं च नवाहं च ------------

पञ्चाक्षरमहं वक्ष्ये श्रुणुष्वेकाग्रमानस
नकारं च मकारं च शिकारं च वकारकम् १
यकारं पञ्च सम्युक्तं प्रणवादि षडक्षरम्
पञ्च पञ्च चतुर्थस्य पञ्चमं पञ्चमं भवेत् २
षष्टमं पञ्चमं पञ्च मायाबीज समन्वितम्
सप्तमस्य चतुर्थस्य द्वितीयाक्षरसम्युतम् ३
यमबीजसमायुक्तं शिवमन्त्रमिति स्मृतम्
नकारं ऋग्वेदमित्युक्तं यजुर्वेदम्मकारकम् ४
शिकारं सामवेदं स्यादथर्वेदं वकारकम्
यकारं सर्वदेहं स्यात्पञ्चाक्षरं प्रकीर्तितम् ५
नकारादि यकारान्तं पृथिव्यां भूतमुच्यते
नकारादि यकारान्तं ब्रह्मादिसदाशिवान्तकम् ६
त्रिष्टुप्चैवानुष्टुप्च सावित्री गायत्रिका
गौतमो अत्रिकश्चैव विश्वामित्रश्च चाङ्गिराः ७
भरद्वाजश्च पञ्चैते नकारादि ऋषिस्तथा
सद्यादिमुखपञ्चान्तन्नकारादीनि चोद्भवम् ८
यकारम्मूर्ध्नि विन्यस्य वकारं च ललाटके
शिकारं कण्ठदेशे तु मकारं हृदये न्यसेत् ९
नकारन्नाभिदेशे तु न्यासं कृत्वा यथाक्रमम्
तदर्धादिसृष्टिरुक्ता पादादिसंहृतिर्भवेत् १०
अङ्गुष्ठादिकनिष्ठान्तं सृष्टिन्यासमुदाहृतम्
कनिष्ठाद्यङ्गुष्ठकान्तं संहारन्यासमुच्यते ११

मध्याद्यनामिकान्तं च स्थितिन्यासमुदाहृतम्  १२
इति योगजे क्रियापादे पञ्चाक्षरविधिर्नाम पञ्चदश पटलः

अथ वक्ष्ये विशेषेण विभवनिश्चयं श्रुणु
सांप्रतं हारकञ्चैव द्विविधं कर्ममुच्यते  १
शिवभुक्तिस्सांप्रतं च परिचाराणान्तु हारकम्
अशक्तस्सांप्रतं कर्तुं शक्तिमान्हारकं कुरु  २
अर्चनं सांप्रतं प्रोक्तं शक्तिन्यासकरं भवेत्
आदिशैवान्तपोयुक्तान् पूर्वोक्तलक्षणैर्युतान्  ३
शतमष्टोत्तरं चैव आदिशैवान्प्रगृह्य च
त्रीणि पञ्चशतं वापि सप्ताष्टनवमं स्मृतम्  ४
त्रीण्यादीनि शतान्तं च यथाविभव विस्तरम्
गुरुर्हत्वादिशैवानां सगोत्रं च -- रो भवेत्  ५
तत्सङ्ख्याश्चक्रलालं च तं संख्यपुष्परक्षका
तत्सङ्ख्या पुष्पदासी च तत्संख्या वस्त्रधारिणः  ६
तत्संख्याकाष्ठ -- गोपालानान्तथैव च
तत्कर्मोपजीवीनां यथाविभवतान्नयेत्  ७
यावद्बलं विभवता तावद्विप्राय दापयेत्
तच्छक्तिं हविषार्धं च शक्तिरर्चन भागकम्  ८
दीपानां भोगवेत्तु गन्धार्थं भोगमेव तु
पुष्पार्थं भागमेवन्तु स्नानार्थं भावमेव च  ९
उत्सवार्थं च भागं च ---- भागमेव च
प्रायश्चित्तार्थ भागं च कृत्तिका दीपभागकम्  १०
आग्रायणार्थ भागं च न्यूनातिरिक्तभागकम्
देवयज्ञस्य भागं च वेदाध्ययनभागकम्  ११
भोगभोजनभागं च विशेषयजनभागकम्

कर्मणां भोगभागं च दासीदासार्हभागकम्  १२
मन्त्ररक्षणभागं च शिला लेखान्तु कारयेत्
देवत्वं परिचारं च देवकानिष्ठ सर्व च  १३
अक्षीणं जीवितं यत्तु यथाविभवनिश्चयम्
देवस्य शेषं यन्मर्त्यमन्यकर्म न कारयेत्  १४
देवालयगृहं गम्या परालयं च दृश्यते
सपुष्पभोजनं कृत्वा कुर्याद्राजोपचारकम्  १५
यथाविभवविस्तारं त्रिधाकृत्वा तु भागकम्
एकभागं च धर्मार्थं द्विभागन्देव शेषकम्  १६
एवं क्रमेण यः कुर्याच्छिवलोकं स गच्छति
इति योगजे क्रियापादे विभव निश्चयन्नाम षोडश पटलः

अथ वक्ष्ये विशेषेण नैवेद्यविधिमुत्तमम्
हेमशाली महाशाली रत्नशाली तथैव च  १
सितशाली कृष्णशाली तत्तद्भेदमनेकधा
व्रीह्यश्च सर्वभेदानां यवगोधूमकानि च  २
एते च सर्वयोग्यास्स्युर्हविश्शेषं विधीयते
शक्तिश्च त्रिशतं व्रीहि द्विगुणं व्यूहमिष्यते  ३
द्विगुणं कुटुंबं प्रोक्तं कुटुंबद्वयवारिषु
वारि द्वयं प्रस्थमुक्तं तद्वयं कुरु चाढकम्  ४
तद्वयं हविरुच्यन्ते तद्वयं शिवमीरितम्
शिवं च द्रोणमित्युक्तं तद्वयं खरिरुच्यते  ५
खारिमयं भारकं च यथाकाममिलि स्मृतम्
शतभारमुत्तमं प्रोक्तं पञ्चाशन्मध्यमं भवेत्  ६
विंशच्च भारन्त्वधमं दशभारं धमाधमम्
क्षुद्रं तु पञ्च भारं स्यान्नीचं भारद्वयन्तथा  ७

अन्य सम्भारकं प्रोक्तं कर्तृशक्ति वशान्नयेत्
आढकन्तु हविः कुर्यात्तदर्धं चरुरुच्यते ८
तदर्ध बलिरित्युक्तं यथाक्रममिति स्मृतम्
गौर्यादि शक्तीनां चैव परिवारन्तथैव च ९
षोडश प्रतिमानां च द्विप्रस्थं वा निवेदयेत्
हविश्चैव चतुर्भागं द्विभागन्तु निवेदयेत् १०
एकभागन्तु शेषं स्यात् शेषं बल्यादि दानकम्
हविरष्टविधं प्रोक्तं मुद्गान्नं पायसान्नकम् ११
कृसरान्नं गुळान्नं च शम्बान्नं च यवान्नकम्
माषान्नं चैव शुद्धान्नं हविरष्टविधं भवेत् १२
तुषं च वर्जयेन्मुद्गे नाळिकेरफलैर्युतम्
तण्डुलस्यार्ध मुद्गं च कल्पं लवणसम्युतम् १३
एवमुद्गान्नमित्युक्तं कृसरान्नं तथैव च
कदळी गुळसम्युक्तं जीरकं च मुशीरकम् १४
नाळिकेरघृतैर्युक्तं बालं साद्रवसम्युतम्
तण्डुलैश्शकलैर्युक्तं नाळिकेरपनसान्वितम् १५
गुळान्नमिति विख्यातम् सर्वकाले तु दापयेत्
सर्वेषां च विधातव्यमुपदंशगुळैर्युतम् १६
दधिघृतसमायुक्तं पञ्चवर्णहविर्ददेत्
तस्थूलप्रस्थमेकन्तु फलैकशपदंशकम् १७
तत्समंगुळसंयुक्तं मरीची लोणसम्युतम्
जीरकन्नाळिकेरं च युक्तं सर्वोपदंशकम् १८
घृतस्य पेषणं कृत्वा शुद्धोपदंशमुच्यते
चूतं च मातुलुङ्गं च तिन्त्रिणी फलसंयुतम् १९
अन्योपदंशमेतेषां मरीचलवणैर्युतम्
जीरकं सर्षपं चैव पेषणं च सुगन्धिकम् २०

अतिपद्वमपक्वं च वर्जयेत्तु विशेषतः
सर्षपं पाचयेद्धीमान् त्रिविधं चोपदंशकम् २१
शुष्कमार्द्रमपक्वं च आम्लपक्वं त्रिधा भवेत्
पनसं कदली चूतं बृहतीकूश्माराडमेव च २२
श्वेतहारी फलं चैव वल्ली पनसमेव च
क्षुद्रमिति ह कोपि निष्पावद्वयमेव च २३
शिग्रुमार्जमकालिं च तिमिसी मातुलुङ्गकम्
नाळिकेरक गायं च रक्तागस्सफलं भवेत् २४
वनदे शारि वल्ली च कन्दकाली च मूलता
माषम्माषमतीञ्चैव उपदंशफलान्विदुः २५
इदमन्यत्र चित्राढचम् भक्तियुक्तं भवेद्विदुः
वल्ली मूलमिभामूलं भिन्नमूलन्तु कर्णिका २६
अन्यमूलन्तु एतेषां मूलवर्गन्ददेद्बुधः
अन्येषां मूलद्रव्याणां भक्तियुक्त वशात्तु ये २७
शक्ति जातिस्तु सर्वेषां वर्जनीया विशेषतः
रक्तध्रुवासं भक्तानां एककालं निवेदयेत् २८
मरीच सर्षपं चूर्णं जीरकन्नाळिकेरकम्
सर्वेषामुपदंशानां सर्वमेतत्प्रकल्पयेत् २९
घृतं च मेळयित्वा तु सर्वद्रव्यसमायुतम्
षड्रसं घृतसम्युक्तं नैवेद्यन्दापयेद्बुधः ३०
कृषिकर्मफलं कर्म पूर्वन्देवनिवेदयेत्
तळिका स्थापयेदन्नं मंकरं तुषयोरपि ३१
अतिपक्वमपक्वं च वर्जयेत्तु विशेषतः
महाहविर्निवेद्यन्तु वस्त्रोर्ध्वे पत्रकन्नयसेत् ३२
कदली पलाशपत्रं वा कन्यत्क्षीरद्रुमन्तु वा
अथेषां शुद्धपत्राणां महाहविर्निवेदयेत् ३३

हविरूर्ध्वोपदंशैश्च गुळं च कदलीफलम्
घृतन्निक्षिप्य यत्नेन दधिवा दुग्धमेव वा ३४
निवेदयेद्धृदा मन्त्री देवस्यत्वेति मन्त्रतः
पाटलिं च सुगन्धी च उशीरमेलसंश्रितम् ३५
पानीयन्दापयेत्पश्चाद्गन्धचूर्णैसमायुतम्
चन्दनं चैव कर्पूरं कस्तूरी मुखसम्युतम् ३६
मन्त्रगेय समायुक्तं व्यजनं मन्दवायुना
हिमाचलसमायुक्त रामवत्सुषिरे स्पृशेत् ३७
एवं कृते तु मर्त्याश्च ऐश्वर्यं सर्वमाप्नुयुः
शनिवारे सौम्यवारे गन्धतैलं क्षिपेद्बुधः ३८
इति योगजे क्रियापादे नैवेद्य विधिर्नाम सप्तदशः पटलः

अग्निकार्यमहं वक्ष्ये श्रुणुष्वेकाग्रमानसा
कुण्डलक्षणमार्गेण कुण्डं कुर्याद्विचक्षणः १
अथवान्यप्रकारेण स्थण्डिलं सिकतैस्तु वा
कोटयाहुतौष्टहस्तं स्याल्लक्षहोमन्तु लक्षणम् २
दशसहस्रं पञ्चहस्तं त्रिहस्तं चतुर्हस्तकम्
द्विहस्तं सहस्रहोमे स्याद्धस्तं पञ्चशताधिकम् ३
रत्निमात्रं शते तावन्मुष्टिमात्रं शतार्धके
मुष्टिमात्रादथो मानादष्टहस्तात्परन्नहि ४
त्रिद्व्येक मेखलोपेतं कुण्डं लक्षणवत्कुरु
स्थण्डिलं हस्तमात्रं स्यात्र्यङ्गुलसमन्वितम् ५
पद्मं च दक्षिणे स्थाप्य सोमे योनिं च कल्पयेत्
त्रिरेखा प्रागुदगग्रा परिधि प्रस्तरान्वितम् ६
पूर्वपश्चिमकुण्डेषु चोत्तराभिमुखस्थितः
अन्येषु प्राङ्मुखो भूत्वा सृक्स्रुवौ कारयेद्बुधः ७

परिस्तरमथो वेद्यां स्थरिडलं सूत्रमध्यमे
परि -- द्मणारभ्य प्राक्परिधिविनाकृतम् ८
कूर्चं स्थाप्य तदूर्ध्वे तु पूर्वाग्रा समिधो न्यसेत्
पञ्चसप्ताष्टनवभिः दर्भैः प्रागादिकूर्चकम् ९
कनिष्ठाङ्गुल प्रमारोन परिधीनि ध्मकान्कुरु
ग्रायामद्वादशाङ्गुळ्याः समिधो कारयेद्बुधः १०
ब्रह्मकूर्चं षडङ्गुळ्यं विष्णुकूर्चन्तथैव च
मध्ये तु रुद्रकूर्न्तु त्रिमूर्तिं स्थापयेद्बुधः ११
त्रिपञ्चसप्तनवकैः कूर्चं सर्वत्रकल्पयेत्
सृक्स्नुवञ्च चतुर्दर्भैः ग्रष्टाङ्गुलन्तु दैर्घ्यकम् १२
पलाशाश्वत्थ पत्रादीन्सृक्स्नुवञ्चैव बन्धयेत्
एकं द्वे त्रीणि दर्भाणां पवित्रं बन्धयेत्क्रमात् १३
त्रिद्व्यङ्गुलन्तदूर्ध्वन्तु मध्ये बन्धन्तदर्धकम्
ग्रश्रं यव प्रमारोन तत्पार्श्वे पाशकन्नयसेत् १४
ग्रनामिकामूलसम्युक्तं पवित्रमिदमीरितम्
ग्रग्निं प्रज्वाल्य परितो परिषेचनमाचरेत् १५
श्रोत्रियागाराग्निजं वाग्निं सूर्यकान्तोद्भवन्तु वा
काष्ठानि मथनं वापि प्रोद्मयेत्तु शिवाम्भसा १६
सुगन्धकाष्ठं सङ्गृह्य ग्रग्निं प्रज्वाल्य बुद्धिमान्
परिस्तरणं च पूर्वाग्रमुत्तराग्रं प्रकल्पयेत् १७
शिवाग्निं जनयेद्विद्वान् शिवमन्त्रं जपेत्ततः
द्विमुञ्चेक हृदयं चतुश्रोत्रं द्विनासिकम् १८
ग्रास्य द्वयं च षरणेत्रं पिङ्गळं सप्तहस्तकम्
त्रिमेखलं त्रिपादं च सप्तजिह्वासमायुतम् १९
चतुशृङ्गं वृषारूढं बालादित्यसमप्रभम्
एवं शिवाग्निं सङ्कल्प्य शिवमन्त्रेण देशिकः २०

वृद्धरूपन्त्यक्ष चतुर्भुजमक्षपिङ्गळगोवृषवाहनम्
रक्तवर्णसितोत्तरीयवरं शक्तिपाणि शिवाग्निस्वरूपकम्  २१
विद्युत्पिञ्जनिभं चतुर्भुजमजारूढन्त्रिपादकम्
चतुश्शृङ्गम्मुखद्वयज्वलितजिह्वासप्तकषट्सुनेत्र  २२
परममौञ्जी त्रिरावर्तित सव्यापसव्ये करे अभयम्
वरयुक्स्रुक्स्रवञ्चापरे ----  २३
ध्यायेद्गार्हपत्य संस्थमनलमेवञ्चगामौळिनम्
बालादित्यनिभं सृगन्यके खहञ्चा भय सव्य-
वामकृतं कूर्चं ॥  संके खे वरान्वरद्विषं सुनेत्रम भुजं अथार्षकं
चोपरि ।
गार्हपत्यो गृहस्थानां पितृणां दक्षिणानलम्  २५
आहवनीयस्तु देवानां तत्तद्रूपं वदाम्यहम्
बालयौवनवृद्धाग्निस्त्रिविधं तत्प्रकीर्तितम्  २६
बालाग्निस्यात्प्रतिष्ठानां उत्सवं यौवनाग्निना
वृद्दाग्नौ नित्यहोमं स्यात्सव्यापसव्यमार्गकम्  २७
काळीचैव कराळी च मनोरमा सुशोभिता
धूम्रवर्णलिङ्गं च विश्वरूपं विलोहितम्  २८
देवीलोलस्य भावस्यादिति शक्तिः प्रकीर्तिता
जिह्वाहस्ताय षट्त्र्यङ्गुलं नाहदण्ड मूलाग्रपुष्कर  २९
रणो ससमाग्ररूपं मध्यद्विपार्श्व बलिकर्म
धृतपूर्ण शोचालसनि दण्डमिदं स्यात्  ३०
ब्राह्मणान्दक्षिणे स्थाप्य कूर्चे पुष्पं सुनिक्षिपेत्
विष्णुं वै वामतस्थाप्य प्रणीता पात्रकं क्षिपेत्  ३१
भवश्च पूर्वकुण्डे तु आग्नेय्यामुग्र एव च
शर्वन्तु दक्षिणे कुण्डे महादेवन्तु नैर्ऋते  ३२
रुद्रं च वारुणे कुण्डे भीमं वै वायुगोचरे

पशुपतिं चोत्तरे कुरडे ऐशान्यामीशमेव च ३३
त्रिणेत्रं चतुर्भुजं चैव जटामकुटधारिणम्
कुरडमध्ये न्यसेदेतान् बाह्ये तु वसवस्तथा ३४
तद्बाह्ये मरुतश्चैव लोकपालाश्च तद्बहिः
लोकपालास्त्रसम्युक्तं मध्यमे होमकर्मणि ३५
सर्वदेवान्समभ्यर्च्य श्रेष्ठहोममिति स्मृतम्
लोकपालास्त्रहीने तु मध्यमे होमकर्मणि ३६
कुरडादि देवतास्सर्वान्विन्यसेत्कुरडमध्यमे
समिधस्सद्यमन्त्रेण आज्यं वामेन हूयते ३७
अघोरेण चरुं हुत्वा पुरुषेण च लाजकम्
ईशेन सर्षपञ्चैव हृदयेन तिलं हुनेत् ३८
वयं हुत्वा हृदामन्त्रं सप्तमन्त्रेण हूयते
पलाशखदिराश्वत्थ --- वटवृक्षकम् ३९
न्यग्रेयम् प्लक्षवृक्षं च अपामार्गं शमी तथा
अश्वत्थं कपित्थकं चैव जम्बूपनसमेव च ४०
एवं च समिधो ख्याता प्रधानस्य पलाशकम्
स्थरिडलोल्लेखनञ्चैवा वेक्षणम्मग्निसुस्थितम् ४१
परिस्तरणं द्रव्य पात्रं प्रोक्षणं पुरयाहमेव च
प्रणीतां विष्णुमभ्यर्च्य ब्रह्माणं चार्च्यकूर्चकम् ४२
आद्यन्त्रिदर्भमग्निस्थन्दर्वी परिधिमेव च
परिषेचनन्ततः कृत्वा प्रागादि च प्रदक्षिणम् ४३
शुद्धं चरुघृतञ्चैव सर्वद्रव्याणि स्थापयेत्
अदित्येन्वादि मन्त्रेण परिषेचनमाचरेत् ४४
युक्तो वहेति मन्त्रेणाग्निमुखं प्रकल्पयेत्
मूर्त्यादि देवतानां च स्वस्वमन्त्रैस्तु पूजनम् ४५
कर्मान्ते चित्ताहुतिं अग्निर्भूतादिराष्ट्रभृत्

सर्वकर्माणि सामान्यं पश्चात्स्वकर्मचिन्तयेत् ४६
ऋतु सङ्गादि षोडशमन्यत्कर्मसमाचरेत्
पञ्चब्रह्मषडङ्गैश्च शिवसंस्कारके हुनेत् ४७
इति योगजे क्रियापादे अग्निकार्यविधिर्नाम अष्टादशपटलः

अथ वक्ष्ये विशेषेण कुण्डलक्षणमुत्तमम्
यथा मण्टपमध्यन्तु नवभागं प्रकल्पयेत् १
मध्यं भागे कृता वेदी उत्सेधं हस्तमात्रकम्
उपवेदी प्रकर्तव्यं विस्तारचतुरङ्गुलम् २
उत्सेधन्तावदेव स्यात्षडङ्गुलमथापि वा
पूर्वे तु चतुरश्रं स्यादाग्नेय्यां योनिकुण्डकम् ३
दक्षिणे चार्धचन्द्रं च नैरृत्यां च त्रिकोणकम्
पश्चिमे वृत्तकुण्डन्तु वायव्यान्तु षडश्रकम् ४
सौम्ये तु पद्मकुण्डं च अष्टाश्रमीशगोचरे
इन्द्रईशानयोर्मध्ये वृत्तं प्रधानकं कुरु ५
सर्वेषामपि कुण्डानां नाहं समचतुरश्रकम्
अष्टहस्तादिमुष्ट्यन्तकुण्डमानं प्रकीर्तितम् ६
सर्वेषामपि कुण्डानां घनं मुष्टिप्रमाणकम्
त्रिमेखलसमायुक्तं एकमेखलमेव वा ७
अथो मेखलमारभ्य द्वे त्रीणि चतुरङ्गुलम्
विस्तारसममुत्सेधं षडङ्गुलमेकमेखलम् ८
योनौ योनिर्न कर्तव्या पद्मे नाभिन्न कारयेत्
तालमात्रं खनीकृत्य मध्ये पद्मं प्रकल्पयेत् ९
रसाङ्गुलन्तु वाकल्प्य वेदाङ्गुलमथापि वा
एकाङ्गुलन्तु वातुङ्गं द्वयाङ्गुलमथापि वा १०
एवं पद्मक्रमं कृत्वा कुण्डन्तस्य तु मध्यमे

मेखलोर्ध्वे तु योनिं च चतुरङ्गुलमानतः ११
श्वभ्रमङ्गुलविस्तारमेकाङ्गुलन्तदुन्नतम्
चतुरं पञ्चधा कृत्वा एकांशं पुरतो न्यसेत् १२
कोणार्धांशं गृहीत्वा तु बहिश्चैव तु वर्जयेत्
तत्कोणं मृगमयेदन्यं योन्याकारन्त्रिसूत्रयुक् १३
विस्तारन्नवधा कृत्वा अंशन्यस्त्वोद्धर्वतः क्रमात्
सूत्रकं पातयित्वा तु भ्रामयेदर्धचन्द्रवत् १४
क्षेत्रव्यासन्तु बुद्धयशं पार्श्वेर्व्यस्त्वा तु कारयेत्
त्रिसूत्रं प्रसारयेद्विद्वान् त्रिकोणं कुण्डमीरितम् १५
चतुरश्रन्नवैः कृत्वा अंशं बाह्ये न्यसेदिति
भ्रामयेद्वृत्तकुण्डन्तु सर्वकर्मसु योग्यकम् १६
पूर्ववद्वृत्तकं कृत्वा पद्माकारन्तु कारयेत्
कर्णाकाष्ठदळोपेतं पद्मोत्सेधं करीयसी १७
चतुरश्रस्य विस्तारं षट्चतुर्भागमाचरेत्
एकभागन्तु निस्त्वा सूत्रयुक्तन्तु बुधः १८
प्रवृत्तकुण्डमाख्यातं पङ्क्त्यंशं वाथ भ्रामयेत्
कुण्डलक्षणमाख्यातं चतुरश्रस्य नाहवै १९
कोणस्यार्धं गृहीत्वा तु कोणे नैव तु कारयेत्
एवं स्वतन्त्रकुण्डं स्या सर्वकार्येषु पूजितम् २०
मुष्टिरत्निश्च बाहुश्च मुष्टिहस्तावसानके
सप्ताश्रं च नवाश्रं च पद्माश्रं षोडश २१
युक्त्या तु योजयेद्धीमान् सर्वकुण्डं प्रकल्पयेत्
कुण्डानामपि सर्वेषां अभ्यन्तरमानमीरितम् २२
मेखलायाः प्रमाणं यत्तत्प्रमाणमिति स्मृतम् २३
इति योगजे क्रियापादे कुण्डलक्षणविधिर्नाम एकोनविंशत्पटलः

शान्तिहोममहं वद्ये श्रुणुष्वेकाग्रमानसा
सदाशिवादिदेवानां परिवारान्तथैव च १
प्राकाराभ्यन्तरे देव स्वनामाद्यैश्च होमयेत्
द्विगुणं पूजयेत्तत्र अर्चनोक्तक्रमेण तु २
शान्तिहोममिति प्रोक्तं सर्वदेवांश्च होमयेत्
शन्तिहोममिति प्रोक्तं मूर्तिहोममथ श्रुणु ३
प्रासादस्य चतुर्दिक्षु अन्तर्मण्टपके बुधः
चतुरश्रं स्थण्डिलं कृत्वा ईशाने वृत्तस्थण्डिलम् ४
अग्निकार्यक्रमेणैव अग्निमुखं च कल्पयेत्
ईशे सादाशिवं मन्त्रं पूर्वे त्वीशानमन्त्रकम् ५
दक्षिणे रुद्रमन्त्रन्तु पश्चिमे विष्णुमन्त्रकम्
उत्तरे ब्रह्ममन्त्रन्तु यथा शक्त्या तु पूजयेत् ६
हविर्निवेदयेत्पश्चात् स्नपनं कारयेच्छिवे
द्विगुणं पूजयेत्तत्र महाहविर्निवेदयेत् ७
मूर्तिहोममिति प्रोक्तं दिशाहोममथ श्रुणु
इन्द्रादीशानपर्यन्तं अष्टदिक्शिवदेवताः ८
स्थण्डिलं सिकतैः कृत्वा चतुरश्रं समन्ततः
शेषाण्यन्यानि सर्वाणि अग्निकार्योक्तमाचरेत् ९
दिग्देवान्पूजयेत्तत्र दिशा होमन्तु पूजयेत्
दिशाहोममिति प्रोक्तं वास्तुहोमन्ततः श्रुणु १०
मण्टपस्य तु मध्ये तु स्थण्डिलं शालिभिः कुरु
वास्तु कुम्भं समारोप्य वास्तुदेवान्समर्चयेत् ११
चतुरश्रं समं कृत्वा हस्तमात्रप्रमाणतः
अष्टाष्टकपदं वापि नवान्तपदमेव वा १२
पिष्टसूत्रेण संल्लिख्य ईशादिदेवमर्चयेत्
ब्रह्मादिदेवानभ्यर्च्य चरकी प्रभृतिरर्चयेत् १३

चत्वारिंशच्च पञ्चैते वास्तुदेवान्समर्चयेत्
वास्तुदेवान्समभ्यर्च्य बलिं मन्त्रेण दापयेत् १४
वास्तुदेवन्ततः कृत्वा देवानामाहुतिन्तु वा
प्रोक्षयेत्तान्यशेषाणि वास्तु कुम्भस्य तोयकैः १५
वास्तुहोममिति प्रोक्तं सर्वकालेषु पूर्वतः
इत्येवं होममाख्यातं स्वस्वमन्त्रैस्तु हूयते १६
इति योगजे क्रियापादे शान्त्यादि होमविधिर्नाम विंशत्पटलः

अथ वक्ष्ये विशेषेण दीक्षाया लक्षणं श्रुणु
दीयते तु शिवज्ञानं क्षीयते च मलत्रयम् १
दीक्षाशब्दमिति प्रोक्तं भुक्तिमुक्ति प्रदायकम्
सप्तधाशैवमुद्दिष्टम् तेषान्नामानि च श्रुणु २
अनादिशैवं प्रथमं आदिशैवं द्वितीयकम्
मन्दाशैवं तृतीयन्तु चतुर्थं चेति शैवकम् ३
पञ्चमन्तारशैवन्तु षष्ठं प्रवरशैवकम्
सप्तमं वास्तु शैवन्तु शैवभेदाः प्रकीर्तिताः ४
शैवास्सप्तविधाः प्रोक्तास्तेषां भेदमनुश्रुणु
आदिशैव प्रमाणानि शिवेन दीक्षितास्स्मृताः ५
प्रथमन्तु द्विजानां च पञ्चवक्त्रेषु दीक्षितः
गौतमः काश्यपश्चैव भारद्वाजो त्रिरेव च ६
पराशरश्च पञ्चैते पञ्च वक्त्रेषु दीक्षिताः
प्रोक्तानामृषीणां च मताश्चैव शिवद्विजाः ७
पुनर्दीक्षां न कुर्यात्तु आदिशैव इति स्मृतः
अदीक्षितश्चतुर्वेदी शिवपूजान्नकारयेत् ८
भृत्यर्थं परमेशानं दीक्षाविरहिता जनाः
आदिशैवेन कर्तव्यम् विप्रादीनान्तु दीक्षया ९

अदीक्षितश्चतुर्वेदी आत्मार्थं पूजयेत्सदा
--------- पुनर्दीक्षा न विद्यते १०
उपनयनी ककाले तु शिवपूजामथाचरेत्
स्नपनं पाङ्गशुद्ध्यर्थं कारयेत्तु शिवद्विजः ११
महाशैवस्तु विप्राणां शिवदीक्षासमन्विताः
अदीक्षितश्चतुर्वेदी परार्थपूजान्नकारयेत् १२
दीक्षितस्य तु विप्राणां षाण्मासं पूजयेद्यदि
षाण्मासात्पतनं याति स वै देवलकस्मृतः १३
त्रीणि वर्षाणि भृत्यर्थं स्थितिलिंगं च दीक्षया
पूजयेद्यदि विप्रस्तु सवै देवलको भवेत् १४
एतेषां लक्षणैर्युक्तं अलकानां च सर्वतः
स्थिरलिङ्गस्य पूजां च न कुर्वीत कदाचन १५
क्षत्रियं चैव वैश्यंश्च अनुशैवा इति स्मृताः
शूद्रो ह्यवान्तरश्चैव क्रमशश्चानुवर्णकम् १६
स्ववर्णाम्बष्टपाराशवा कुलालो मर्धपट्टका
इत्यादि प्रवरशैवानामन्त्यशैवमतश्शृणु १७
अन्येषां चैव जातीनां अनुशैवा इति स्मृताः
आदिशैवैस्तु कर्तव्यम् प्रतिष्ठाद्यर्चनान्तकम् १८
अन्यथा कारयेद्यस्तु निष्फलन्तदवाप्नुयात्
वेदवेदाङ्गतत्वज्ञा आदिशैवा इति स्मृताः १९
शैवभेदं समाख्यातं दीक्षाविधिमतश्शृणु
रोहिणीश्रवणं चैव श्रविष्ठा त्रीणि चोत्तरा २०
पुष्ययुक्शतभिषञ्चैव दीक्षा नक्षत्रमुच्यते
स्थिरराशौ प्रकर्तव्या उभयोश्च शुभोदये २१
दीक्षाकर्म समारभ्यन्तत्र सोमोदयं विना
अष्टमस्थान्गृहान्सर्वान्परिहार्य विशेषतः २२

रिक्ताष्टमीं च नवमीममावास्यां च वर्जयेत्
अङ्कुरार्पयेत्पूर्वं पूर्वोक्तेन विधानतः २३
शिष्यानुपोषितान्स्नातान्कृतशौचां जितेन्द्रियान्
पादप्रक्षाळनं कृत्वा आचामं विधिना चरेत् २४
शिवाग्रे मण्डलं तत्र पूर्वोक्तलक्षणैर्युतम्
मण्टपं मण्डयेद्धीमान् प्रतिष्ठामण्टपं यथा २५
मण्टपस्य तु मध्ये तु एकद्वित्र्यन्तकं कुरु
वेदीं कुर्याद्यथान्यायं शिवलिङ्गमण्टपन्तु वा २६
आचार्यमनोभङ्गं सर्वतो भद्रमेव वा
स्वस्तिकञ्चार्धचन्द्रं च मण्डलं तत्र वर्तयेत् २७
मध्यमे स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः
तदर्धं वा तदर्धं वा अष्टपत्रं सकर्णिकम् २८
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
लाजपुष्पैश्च विकिरैर्भूषयेत विशेषत २९
सवस्त्रं हेमसम्युक्तं सरत्नं सपिधानकम्
नवकुम्भं वर्धनीं च गन्धतोयेन पूरितम् ३०
पल्लवैस्सूत्रकैश्छाद्य अर्घ्यं पुष्पं विनिक्षिपेत्
शिवकुम्भं च विद्येशं मनोन्मनी न्यसेद्बुधः ३१
कुण्डं वा स्थण्डिलं वापि एक पञ्च नवन्तथा
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत् ३२
उत्तरे स्थण्डिलं कुर्यात्कम्बलेन तु वेष्टयेत्
शिष्यदेहन्तु सम्प्रोक्ष्य कौतुकं पूर्वमन्त्रतः ३३
बन्धयेदादिशैवेन मधिवासनमाचरेत्
नृत्तगीतसमायुक्तं विनोदं कारयेद्बुधः ३४
नमश्शम्भो त्रिणेत्राय पिङ्गळाय महात्मने
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ३५

एवं मन्त्रं जपित्वा तु सदाशिवमनुस्मरेत्
ततः प्रभाते विमले सूर्योदये तु कारयेत् ३६
पादप्रक्षाळनं कृत्वा आचम्य विधिना बुधः
नेत्रबन्धं प्रकर्तव्यम् हृदयेन तु मन्त्रतः ३७
दुकूलपट्टदेवाङ्गैः कार्पासिकमथापि वा
उत्तमं द्वादशं हस्तं दशहस्तन्तु मध्यमम् ३८
अधमन्नवहस्तन्तु चतुस्तालप्रमाणतः
नववस्त्रेण संवेष्टयम् जीर्णस्फुटितवर्जनम् ३९
सद्योहस्तन्तु वस्त्रेण नेत्रबन्धन्तु कारयेत्
व्योमव्यापिञ्जपेत्तत्र तत्पुरुषेण सम्युतम् ४०
नेत्रबन्धं प्रकर्तव्यम् स्वर्णपुष्पसमायुतम्
उत्तमन्दशनिष्कन्तु मध्यमं चाष्टनिष्ककम् ४१
अधमं पञ्चनिष्कन्तु लक्षणं पद्मपुष्पवत्
दरिद्राणान्तु सर्वेषां यथालाभन्तु कारयेत् ४२
उत्तराभिमुखो भूत्वा एकचित्तेन बुद्धिमान्
ईशानेन तु मन्त्रेण पुष्पं हस्ते निधापयेत् ४३
प्रदक्षिणत्रयं कृत्वा वामदेवेन मन्त्रतः
ध्यात्वा परममीशानं शिवमन्त्रेण बुद्धिमान् ४४
मण्डले विकिरेत्पुष्पं स्वस्तिमङ्गळवाचकैः
यस्मिन्मन्त्रे वसेत्पुष्पन्नामतो त्र तदात्मकम् ४५
तन्मन्त्रं सिध्यते तस्मात्कुरुते चाप्यनुग्रहम्
ईशानस्य दळे व्याधिमाग्नेय्यां शोकजन्तु वा ४६
नैर्ऋत्यां श्रीकरं प्रोक्तं अमानुष्यन्तु वायवे
चतुर्दिक्षु च विप्रेन्द्र तच्छ्रीकरमिति स्मृतम् ४७
कर्णिके पतिते पुष्पे सुखं चैव भवेत्तथा
ईशानस्य दळे चैव नेत्रनाममिहोच्यते ४८

उदकेन समायुक्तं भस्मं शिरसि निक्षिपेत्
गन्धादिभिरभाभ्यर्च्य हुहियेन तु मन्त्रतः ४९
शिवकुम्भाद्यतोयेन प्रोक्षयेच्छिष्य मूर्धनि
ईशानं मूर्ध्नि विन्यस्य मुखे तत्पुरुषन्न्यसेत् ५०
अघोरं हृदि विन्यस्य गुह्ये वामं प्रकल्पयेत्
सद्योजातन्न्यसेत्पादे विन्यसेच्छिष्य देहके ५१
हृदयं हृदये न्यस्य शिरश्शिरसि विन्यसेत्
शिखायान्तु शिखान्यस्य कवचं स्तनमध्यतः ५२
अस्त्रं हस्त प्रदेशे च नेत्रं नेत्रे तु विन्यसेत्
देवस्य दक्षिणे पार्श्वे पलाशपत्रसम्युतम् ५३
कूर्चनैवेद्यसम्युक्तं आसनन्तत्प्रतिन्नतम्
आसनस्थन्तु शिष्यं वै पूर्वाभिमुखमेव च ५४
अग्निबीजेन सम्युक्तन्त्रिकोणमण्डले स्थितम्
पादाङ्गुष्ठात्समारभ्य दहेद्यावच्छिरोन्तकम् ५५
अग्रतस्स्थापयेत्तत्र एकचित्तेन वै बुधः
चन्द्रमण्डलसङ्काशम्मकारं चात्मसम्भवम् ५६
विद्यातत्वमुकारन्तु शिवतत्वं शकारके
ओमित्य कमलं योगपीठमथोमुखम् ५७
चिन्तयेदमृतन्तस्मिन् सुषुम्नाभिन्नमस्तकम्
तेनप्लावितमात्मानं आपूर्यन्तं विचिन्तयेत् ५८
इमां ये भ्यासने नित्यं समाधिम्मृत्यु नाशनम्
न तस्य जायते मृत्युरिति शास्त्रस्य निश्चयः ५९
षडध्वं विन्यसेत्पश्चाच्छिष्य देहे विशेषतः
मन्त्राध्वा च पदाध्वा च तत्वाध्वा भुवनाध्वकम् ६०
वर्णाध्वा च कलाध्वा च विंशत्येव शिवं पदम्
सत्वं रजस्तमश्चैव आत्मानं चान्तरात्मकम् ६१

परमात्मानमित्येते आत्मत्रयन्तु ध्याययेत्
अग्निं सूर्यं शशाङ्कं च मण्डलत्रयकन्यसेत् ६२
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
शक्तीनामष्टकन्नयस्य बिन्दुनादशिवान्यसेत् ६३
पञ्च ब्रह्म शिवाङ्गैश्च प्रासादन्तु सदाशिवम्
शिष्यदेहे न्यसेत्तत्र प्रणवादि नमोन्तकम् ६४
तत्तन्मन्त्रमनुस्मृत्य योजयेच्छिष्यदेहके
मन्त्राध्वानं न्यसेन्मूर्ध्नि पदाध्वानं मुखे तथा ६५
तत्वाध्वानं हृदिन्यस्य नाभौ तु भुवनाध्वकम्
वर्णाध्वानं मेढ्रदेशे पादयोस्तु कलाध्वकम् ६६
कलाध्वानं पुनर्योज्य पादाधारशिरोन्तकम्
सद्यकलाभिरष्टाभिर्वामदेवन्त्रयोदश ६७
अघोरस्य कलाश्चाष्टौ चतुर्भिर्वक्त्रमेव च
ईशानस्य कलाः पञ्च अष्टत्रिंशत्कला न्यसेत् ६८
विद्येश्वराणामष्टेकं दशलोकाधिदेवताः
एवं पदार्थं विन्यस्य कृत्वाध्वानं पुनर्न्यसेत् ६९
पृथिव्यापस्तथा तेजो वायुराकाशमेव च
श्रोत्रत्वक्चक्षु जिह्वा च घ्राणं चैव तु पञ्चकम् ७०
वाक्पादपाणिपायूपस्थञ्चेति पञ्चमम्
मनोबुद्धिरहंकारः प्रकृतिः पुरुषस्तथा ७१
रागो माया च विद्या च कलानियतिरेव च
विग्रहे बेरसकळं शुद्धमाया तथैव च ७२
शुद्धविद्या शुद्धकला सदाशिव शिवः परम्
षड्त्रिंशत्तत्त्वमेवन्तु क्रमेणैव तु विन्यसेत् ७३
भुवनाध्वन्ततो न्यस्य कलाध्वादि शिवान्तकम्
भुवनाध्वन्यसेत्पश्चान्मेढ्रमूर्ध्वं क्रमेण तु ७४

अधस्ताद्धृदयादीनि कल्पयेत्कल्पवित्तमः
कलानि श्वा द्धकारान्तं नकारानेकविंशतिः ७५
रौरवं कुम्भिपाकं च महारौरवमेव च
क्षुरं च अतितालं च जलं च सितलेन च ७६
उष्णसन्तापनं चैव लोहतप्तन्तथैव च
कृकशल्मनि कूपं च निलयन्त्रेषु यन्त्रकम् ७७
धनुरग्निरयं वज्रं त्रिशूलनियमेन च
पाणिन्तत्र पांसुं वैतरणी तथैव च ७८
तलं च वितलं चैव वितलं यत्तलातलम्
सुतलन्नरतलं चैव रसातलन्ततोपरि ७९
भूलोकं च भुवर्लोकं स्वर्लोकं च तथैव च
महालोकं च विज्ञेयं जनलोकन्तथैव च ८०
तपोलोकं सत्यलोकं गान्धर्वं यक्षलोककम्
विद्याधराणां लोकं च सिद्धचारणलोककान् ८१
अप्सरीणां च लोकं च किन्नराणां च लोककम्
इन्द्रलोकञ्चाग्निलोकं यमलोकं च राक्षसम् ८२
वारुणं वायुलोकं च सोमलोकन्तथैव च
ईशानन्देवलोकं च ब्रह्मलोकन्तथैव च ८३
ब्रह्मलोकोपरिष्टात्तु विष्णुलोकमतः परम्
अनन्तेशस्य लोकं च सूक्ष्मलोकमतः परम् ८४
शिवोत्तमस्य लोकन्तु एकनेत्रस्य लोककम्
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिनः ८५
महेश्वरस्य लोकं च सदाशिवस्य लोककम्
लोकालोकशिवालोकं क्रमशः परिकीर्तितः ८६
शिवलोको परिष्टात्तु अन्यं लोकन्न विद्यते
नाभिमूलात्समारभ्य यावद्धृदयदेशकम् ८७

वर्णाध्वानन्त्यसेदेतत् शिरः पादान्तमेव च
अकारं मूर्ध्नि विन्यस्य आकारन्तु ललाटके ८८
इकारन्दक्षिणे नेत्रे ईकारं वामनेत्रके
उकारन्दक्षिणे नासे ऊकारं वामनासके ८९
ऋकारं दक्षिणे श्रोत्रे ॠकारं वामकर्णके
ऌकारं दक्षिणे गण्डे ॡकारं वामगण्डके ९०
एऐ तालुद्वये चैव ओ औ दन्तद्वयेपि च
अं अः कण्ठयोर्न्यस्य कलाष्षोडश एव च ९१
कवर्गन्दक्षिणे हस्ते चवर्गं वामहस्तके
टवर्गन्दक्षिणे पादे तवर्गं वामपादके ९२
पफौ च दक्षिणे पार्श्वे बभौ च वामपार्श्वके
मकारं हृदये न्यस्य यकारं त्वचि विन्यसेत् ९३
रकारं रक्तमेवन्तु लकारं मांसमेव च
क्षकारं वृषणे प्रोक्तं अक्षराणि क्रमान्न्यसेत् ९४
नवत्रिंशत्कलान्तत्र कादिपादान्तकन्न्यसेत्
तारासुतारामणिना तायन्त्रि च सुतारिणी ९५
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च
शान्त्यतीतं परं व्योम क्रमाद्व्यान्य तद्ववित् ९६
तमोमोहाक्षुधानिद्रा वृत्या माया भया जरा
रजो रक्षा रतिः पाल्या श्यामा तृष्णा विधिः क्रिया ९७
धृतिः कार्या च रात्री च द्रामणी द्रोगणी तथा
विभूतिधृतिलक्षामे मथ कान्ति श्चथस्थितिः ९८
नवत्रिंशत्कलाह्येताश्शिष्यदेहे तु विन्यसेत्
हृदये चाग्निकन्न्यस्य मुखे वायुं च विन्यसेत् ९९
आकाशम्मूर्ध्नि देशे तु आपः कोटि प्रदेशके
पृथिवीं पादयोर्न्यस्य पञ्चभूततलान्यसेत् १००

मन्त्राध्वां सद्यमन्त्रेण वामदेव पदाध्वकम्
तत्वाध्वानमघोरेण भुवनं पुरुषेण तु १०१
ईशानेन तु मन्त्रेण वर्णाध्वं होमयेत्ततः
एवमेव क्रमेणैव शिष्यदेहे तु विन्यसेत् १०२
ईशानं मूर्ध्नि विन्यस्य मुखे विष्णुश्च देवता
प्रासादं वास्तुदेवानां ग्रामं पैशाचके कुरु १०३
विघ्नेशी क्षेत्रपाली च दुर्गालयश्च सर्वतः
गुरु वास्तु योगस्थानं च द्विधा देवालयं स्मृतम् १०४
अन्येषां चैव पूर्वन्तु ----- योगकम्
ईशे शङ्करभवनं पर्जन्यांशे जयन्ते वा १०५
सोमेकदितिपादे शिवस्थानं पश्चिममुखम्
योगं स्थानमन्येषां चैव पूर्वमुखम् १०६
विष्णुमुखं सर्वग्रहं अष्टदिङ्मध्यमे स्थितम्
भूपरीक्षा विधानान्ते भूमानामिति कथ्यते १०७
ओजे युग्म पादे वगेथ वा विवरयोगवै शुद्धिः
गुणोत्तर संवर्ग्यो भवेदिष्ट प्रमाणतः १०८
कर्णभुजा च सकर्णपलं कृतिवर्गो भवेत्
----- के गी भुजावर्ग समासतः १०९
शतस्य दशमूलं स्यात् देवमूलक्षमं भवेत्
सर्वाभगस्तु भुजकोटया सतर्धद्विभुजाफलम् ११०
त्रिवर्गं धनमाख्यातं द्वादशाश्र षडश्रकम्
परिधिवृत्तविष्कम्भं पादं फलमूलहतं घनम् १११
मनुष्यो बाणसंसर्ग यावद्भागमुदीरितम्
करवपेन तु सादृश्यं षट्भागन्तु षडश्रकम् ११२
भुजापिण्डतलीभूत चतुर्थं स्थाप्य तत्र तु
बहुत्यक्त्वा क्रमेणैव फलं वर्गसुवर्गजम् ११३

पादरेखा तलेनैव क्रमेणैव समानयेत्
इच्छया फलमाहृत्य प्रमाणाप्तफलन्नयेत्  ११४
तद्वशात्सर्वमानीय प्रत्युत्पन्नेन वाथवा
-- श्रेपि संकेवलानि याने याने दशानि च  ११५
एवं संक्षेपतः प्रोक्तं भूमानमिति कथ्यते
भूमान इति विज्ञेयामायादील्लक्षयेत्क्रमात्  ११६
धनं न्ये योनि नक्षत्रे स्वायुश्चांशको तिथिवारेष्ट
नाच संशोध्य शुभे वास्तुं समारभेत्  ११७
विस्तारेणान्यसेद्दैर्घ्यं तन्मासीवसस्तथा
विस्तारायामसम्युक्ता राशीर्वा थीनि रक्षयेत्  ११८
वसुभिस्तुति ते भानु हत शेषं धनमिति
सगन्धे वह्निभिस्सूत्रे भक्तशेषाव्यवस्तथा  ११९
रामस्तेष्ट ह्रते योनिरष्टभिर्वर्धते पुनः
नागरे नागरं लिङ्गं वेसरे वेसरन्तथा  १२०
द्राविडे द्राविडञ्चैव त्रिविधं प्रासादमीरितम्
सात्विकं राजसं चैव तामसं च त्रिधा भवेत्  १२१
सात्विकन्नागरं प्रोक्तं राजसं द्राविदम्भवेत्
तामसं वेसरं प्रोक्तं पुंस्त्री नपुंसकन्तथा  १२२
नागरं पुंविमानेन लिङ्गस्य स्थितप्रासादकं कुरु
शिवाधिकानां लिङ्गानां प्रासादमस्यनं कुरु  १२३
त्रैराशिकस्य लिङ्गस्य शयनप्रासादमुच्यते
पादबन्धं स्थितं प्रोक्तं प्रतिबन्धं चासनं भवेत्  १२४
पद्मबन्धन्तु शयनं ज्ञेयं तत्रापि भेदयुक्
ब्राह्मणक्षत्रियो वैश्याश्शूद्राः प्रासादमुच्यते  १२५
नागरं द्विजमित्युक्तं द्राविडं क्षत्रियस्य तु
वेसरं वैश्यशूद्राणां जातिभेदमितीरितम्  १२६

नागरं द्राविडाख्यं च वेसरन्त्वधि देवताः
ईशः पितामहश्चैव विष्णुस्तत्राधिदेवताः १२७
एवं प्रासादमेवोक्तं सञ्चितादीनि भेदयुक्
सञ्चिता सञ्चितञ्चैव पथ उपसञ्चितमिति त्रिधा १२८
सञ्चितं स्थापने प्रोक्तं सञ्चितन्नृत्तरूपकम्
उपसञ्चितक्रीडाभं --- पादमिति स्मृतम् १२९
प्रतिबन्धन्त्रिधाप्रोक्तं जाग्रस्वप्नन्तु योगयुक्
पद्मबन्धं त्रिभेदं स्याज्ज्ञयने पार्श्व भावयेत् १३०
स्वप्नावस्था यजुच्छाया त्रिविधं प्रासादलक्षणम्
अधिष्ठाना त्रिधाबन्धात्माबन्धं पुष्णबन्धं पुष्कळं पद्मकेसरम् १३१
त्रिविधं पद्मबन्धं स्यात्तत्तत्कर्म वशात्ततः
चतुर्दशमधिष्ठानं यथाकर्मेण वक्ष्यते १३२
पुंस्त्री नपुंसकञ्चैव त्रित्रिमे गदेन भाक्
लिङ्गमानवशात्प्रोक्तं देहं प्रोक्तं क्रमागतम् १३३
मानाङ्गुलेन कर्तव्यं स्याद्बाह्ये मानमुच्यते
त्रिहस्तं पञ्चहस्तं वा --- नवहस्तकम् १३४
एकभूमिविमानादि त्रिभूम्यन्तं विधीयते
एकादशादि पञ्चाशद्धस्तसङ्ख्या इति स्मृतम् १३५
द्वादशादिविमानान्तमानमेवं विधीयते
विस्तारद्विगुणोत्सेधम् क्षुद्राणान्तु विधीयते १३६
सपादं सार्धमूलेन द्विगुणं महतिरुच्यते
क्षुद्राणामपि सर्वेषां द्विगुणादधि हस्तयुक् १३७
यावत्प्रासादमुसेधमष्टभागं विधीयते
एकभागमधिष्ठानाद्विभागं पादमुच्यते १३८
प्रसारमेकभागं स्याद्गळमेकेन उच्यते
शिखरन्तु द्विभागं स्यात्स्थूपिमेकेन कारयेत् १३९

कराठं त्रिभागमेवं स्यादेकभागन्तु कम्पकम्
त्रिभागं पट्टिका प्रोक्ता एकभागेन कुम्भकम्  १४०
पादबन्धमधिष्ठानं छेदरीदा यथोचितम्
प्रतिबन्धमष्टाद --- सप्तभागं च वप्रकम्  १४१
षट्भागं कुमुदं प्रोक्तं एकभागन्तु युक्युतम्
एकभागं त्र्यश्रं स्यात्प्रतिमुखं द्विभागकम्  १४२
वाजनमेकभागं स्या --- बन्धन्तदुच्यते
प्रतिस्तंभ प्रतिरूर्ध्वे द्वारं कुर्याद्विशेषतः  १४५
एकोनविंशतिर्भागं पद्मं चैव षडश्रकम्
कम्पमेकांशमित्युक्तं ऊर्ध्वपद्मं षडंशकम्  १४६
तदूर्ध्वे त्र्यंशकं चैव वृत्तं च कम्पमेककम्
द्व्यांशं पट्टमित्युक्तं एकांशं कम्पमुच्यते  १४७
पद्मबन्धमिति प्रोक्तं सर्वकार्येषु पूजितम्
यावत्प्रासादविस्तारं पञ्चविंशतिरेव वा  १४८
चतुर्विंशतिकेवापि षड्विंशतिकमेव वा
एकभागमिदं प्रोक्तं मूलपादस्य विस्तरम्  १४९
विस्तारमष्टधा भज्य अभ्रतारं सप्तांशकम्
अग्रपादद्वयं प्रोक्तं उपानोत्सेधमुच्यते  १५०
---दर्धमित्युक्तं उपानमिति कीर्तितम्
--- पानस्यादधिष्ठान तद्व्शं जगति निर्गमम्  १५१
तावत्कुमुदनिष्क्रान्त कुराडसमं भवेत्
कम्पमुत्सेधसमं महापट्टी त्र्यंशकम्  १५२
अग्रपादस्य विस्तारं तद्दराडमिति कथ्यते
द्विदराडे वेदिकास्याद्वेद्युत्सेध नवांशकृत्  १५३
भागं गळमित्युक्तं द्विभागं पट्टिका भवेत्
ज्ञुद्रकम्पद्व्यंशकमूर्ध्वकम्पः क्रमोगतः  १५४

तावद्वा पादकुम्भे तु वृत्ताकारमिहोच्यते
तस्योत्सेधं रसांशे तु ---स्त्रन्तु भवेत् १५५
वेदभ्याहन्तु कुम्भस्यादेकेन कर्तमुच्यते
ग्रास्यमेकेन कर्तव्यं पद्ममेकेन कारयेत् १५६
ग्रपांशेन तु नीव्रं स्यादर्धार्धे भनेकद्वयम्
ग्रर्धांशेनैव कर्तव्यम् ग्रास्यविस्तारमुच्यते १५७
समेकेन कर्तव्यं द्व्यंशं कुम्भविस्तारम्
--- ध्रकर्णौ पादविस्तृतम् १५८
मध्येन वृद्धिपादं स्याच्चतुर्गुणन्तु विस्तृतम्
दण्डोत्सेधं गुणांशेन भागेनोत्सेधमुच्यते १५९
मण्डिकामेकभागन्तु फलांशेनैव कारयेत्
वीरकाण्डस्य विस्तारं पोतविस्तारमेव वा १६०
वेदिका भागमेवं वा उत्सेधं पादहीनकम्
पञ्चांशेनोत्तमं विद्याच्चतुरा मध्यमं भवेत् १६१
त्रितयं बाधमं प्रोक्तं पोतिकायाममुच्यते
ग्रंशेन पोतिकोत्सेधमुत्तरान्तं प्रकीर्तितम् १६२
उत्तरे चैव एकांशं चतुर्भागैकवर्जितम्
ग्रंशेन हासमालोच्य चतुर्भागैकवाजिनम् १६३
द्व्यंशेन कम्पोच्चं ग्रर्धांशेन तु सम्पकम्
निर्गमन्तु द्वयांशं स्यादुपानं सममेव तु १६४
शेषप्रस्तारमानन्तु पञ्चभागैर्विभाजयेत्
ग्रलिङ्गाथांशमेवन्तु ग्रंशेनान्तरितं भवेत् १६५
प्रतिमुखं द्वयांशं स्यात्प्रवाजनमेककम्
वेदीञ्चैव विशेषेण त्र्यंशेन वेशनम्भवेत् १६६
द्व्यंशेन वेदिकोत्सेधं षट्भागं कारवैन्हतः
कर्णं चैव त्रयंशं स्यादेकेनाधार पट्टिका १६७

वेदिकां भारमर्धांशमर्धांशं कम्पमुच्यते
वेदिविस्तारपञ्चांशं चतुरं ग्रीववविस्तरम् १६८
उत्तरं चोर्ध्वकांशेन कुम्भाङ्गैर्वाजनं भवेत्
अर्धांशं हस्तमाला च अर्धेन हंसपट्टिका १६९
प्रासादं चाष्टधा कृत्वा वेदिविस्तारसप्तकम्
वेदिका तु त्रिभागं स्यात् द्विभागं बिलविस्तृतम् १७०
वेदिविस्तारमेवन्तु शिखरान्तरविस्तृतम्
महानसा त्रिभागैकं शिखरार्धेन चोच्छ्रयम् १७१
उत्सेधन्तु त्रिधा कृत्वा एकभागन्तु निर्गमम्
शिखरे पञ्चभागे तु त्रिभागं फलका स्मृतम् १७२
पालिके पञ्चभागे तु युगांशं पद्मविस्तरम्
पद्मभारत्रिभागेकं कुम्भविस्तारमुच्यते १७३
कुम्भतारत्रिभागेकं पद्माधोवलग्नकम्
वलद्रस्य त्रिभागेकं कुम्भस्योपरिकन्धरम् १७४
कन्धरत्रिगुणं पालि तन्त्रि भागेककुन्तळम्
द्वाविंशति विभागेन स्थूपिकोत्सेधमुच्यते १७५
पद्मोच्चंती पद्मोच्चन्तीर्थ स्कन्धं स्यादर्धमंशकम्
अर्धार्धाधरपद्मन्तु स्कन्दं स्यादर्धमंशकम् १७६
अर्धर्धाधारपद्मन्तु ऋष्यसन्तु धनोच्चयम्
अर्धचोर्ध्वक पद्मन्तु रसांशं ग्रीवमुच्चकम् १७७
कम्पन्नीवं च सार्धांशं लग्नकण्ठं च शङ्करम्
कुमुद्रियं पञ्चभागार्थं एवं स्थूपिरुदाहृतम् १७८
एवमेव प्रकारेण प्रासादं कारयेत्ततः
प्रासादार्थ प्रमाणेन अर्धमण्टपमिष्यते १७९
समं वापि त्रिपादं वा अर्धं वा विस्तृतं भवेत्
त्रासादस्य समन्दीर्घन्त्रिपादं वा विधीयते १८०

दिशा मूर्तिं प्रवक्ष्यामि श्रुणुष्वेकाग्रमानसा
इन्द्रं पूर्वे तु संस्थाप्यं दक्षिणामूर्ति दक्षिणे १८१
पश्चिमे नारसिंहन्तु उत्तरे तु पितामहम्
सर्वलक्षण सम्युक्तं दिशामूर्तिं प्रकल्पयेत् १८२
प्रासाद पृष्ठपार्श्वे तु कर्तव्यं तोरणत्रयम्
वृतेरुत्तरसीमान्तं तोरणस्योच्छ्रयं भवेत् १८३
प्रासादलक्षणं प्रोक्तं मण्टपानामथोच्यते
चतुष्पाद समायुक्तं शृङ्गाहमिति कीर्तितम् १८४
द्विहस्तं च द्विहस्तार्धं त्र्यहस्तं सार्धसम्युतम्
चतुर्हस्तं च सार्धं च पादायामन्तु षट्भवेत् १८५
मण्टपं कारयेदेवं सर्वलक्षणलक्षितम्
पञ्चप्राकारसंयुक्तं लक्षणेन समन्वितम् १८६
प्रासादस्य तु विस्तार तद्दण्डमिति चोच्यते
दण्डार्धेन तु कर्तव्यं अन्तर्मण्डलमुच्यते १८७
अन्तर्हारि दण्डमित्युक्तं द्विदण्डं मध्यहारयोः
चतुर्दण्डप्रमाणेन मर्यादाभित्तिरेव च १८८
सप्ताष्टदण्डमानेन महामर्यादभित्तिकम्
अध्यर्धं द्विगुणं वापि त्रिगुणं वा चतुर्गुणम् १८९
रेखायाममिति प्रोक्तं प्राकाराणां विशेषतः
सर्वलक्षणसम्युक्तं प्राकाराणां प्रकीर्तितम् १९०
प्रासादगर्भमानेन परिवारालयम्
पूर्वे तु वृषभस्थानमाग्नेय्यां सिंहवाहिनी १९१
याम्ये मातृगणानां च नैर्ऋत्यान्तु विनायकम्
सुब्रह्मण्यं च वारुण्यां वायौ ज्येष्ठालयं भवेत् १९२
सौम्ये तु केशवस्थानमीशे चण्डेश्वरालयम्
एवमेव प्रकारेण सर्वसामान्यमीरितम् १९३

चतुर्दिन्नु गोपुरं कुर्यात्सर्वालङ्कारसम्युतम्
शिल्पशास्त्रोक्तमार्गेण प्रासादं गोपुरं चरेत्  १९४
पूर्वाग्निमध्यमे चैव धनधान्यगृहं भवेत्
अग्निगोपुरयोर्मध्ये कुर्यादायुधमराटपम्  १९५
वायोर्वरुणयोर्मध्ये शयनस्थानमुच्यते
दन्निणे वापि कर्तव्यं ईशाने वापि कारयेत्  १९६
वायव्यसोमयोर्मध्ये धर्मश्रवणमराटपम्
सोमईशानयोर्मध्ये कूपस्थानमिति स्मृतम्  १९७
इन्द्रईशानयोर्मध्ये वाद्यस्थानन्तु कारयेत्
पावके चोत्तरे चैव पचनालयमुच्यते  १९८
चतुर्दिन्नु च कर्तव्यं बलिपीठं विशेषतः
गर्भन्तु दशधा कृत्वा षट्भागं पीठविस्तरम्  १९९
द्वारविस्तारमानं च द्विगुणन्त्रिगुणन्तु वा
विस्तारेण समुत्सेधं षोडशांशेन भाजयेत्  २००
उपानमेकभागन्तु चत्वारो जगती भवेत्
कुमुदं त्रिभागं कुर्याद्वृत्तमष्टाश्रमेव वा  २०१
भागेन पट्टिकां कुर्या कराठञ्चैव तु चांशकम्
तदूर्ध्वे पट्टिकांशेन द्विभागेनोर्ध्व पट्टिका  २०२
तदूर्ध्वे पट्टिकांशेन वृत्तं वा चतुरन्तु वा
उत्सेधस्य चतुर्भागमेकांशं पद्ममुच्यते  २०३
पद्मं चैव त्रिधा भज्य अधः पद्मं द्वयांशकम्
ऊर्ध्वपद्मन्तु भागेन कर्तव्यं लन्नणान्वितम्  २०४
आयव्ययं च नन्नत्रं योनिवाराङ्ककानि च
प्रासादस्य तु विस्तारं ऋषिभिर्द्विगुणैस्ततः  २०५
आदित्येन हरेच्छेषं आयाममिति च स्मृतम्
तेषु नन्दगुणैनैव धर्मांशे हारयेद्वयम्  २०६

विस्तारवसुगुणयन्तु त्रिगुणैस्तु हरेत्ततः
शेषन्नक्षत्रमेवं स्याद्गुणेन गुणितं कृतम् २०७
वसुभिर्हारयेत्तत्र योनिरित्यभिधीयते
विस्तारनन्दगुणितं ऋषिभिर्हारयेत्ततः २०८
सूर्यवारादि वारं स्यात्पुनर्वेदगुणैर्युतम्
नवभिर्हारयेत्तत्र त्वंशकन्तु विधीयते २०९
आयाधिक्यं व्ययं क्षीणं सर्वसम्पत्सुखं भवेत्
आयहीनं व्ययाधिक्यं रोगमृत्युकरं भवेत् २१०
यजमानानुकूलेन नक्षत्रं कारयेद्बुधः
ध्वजं च वृषभं सिंहं हरित चैव शुभं भवेत् २११
सितज्ञेन्दु गुरुर्मुख्यं गुरुवारस्तु शोभनम्
न स्वरं क्लीब षण्डं च निधनं चैव वर्जयेत् २१२
गणानसुरमानुष्यं वर्जयेत्तु प्रदां भवेत् २१३
इति योगजे क्रियापादे प्रासादलक्षणन्नाम द्वाविंशत्पटलः

अथ वक्ष्ये विशेषेण लिङ्गलक्षणमुत्तमम्
लिङ्गन्तु द्विविधं प्रोक्तं स्थावरं जङ्गमन्त्विति १
शैलजं मृण्मयं चैव शिरोसूत्रयुतन्तु वा
सूत्रहीनं विहीनं वा द्विविधं लिङ्गलक्षणम् २
अजविष्णुहरैर्युक्तं स्थावरं लिङ्गमुच्यते
पीठार्धेन समं बद्धं जङ्गमं लिङ्गमुच्यते ३
मानुषेण कृतं लिङ्गलक्षणन्त्वधुनोच्यते
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने ४
मधुमाधवशुक्लेषु सहस्यकतपस्ययोः
तपस्येतेषु मासेषु माखमासं विवर्जयेत् ५
विघ्नेशं पूजयेत्पूर्वं शिवं सम्पूजयेत्पुनः

सितवस्त्र परीधानौ गन्धमाल्यैरलङ्कृतौ ६
प्राच्यां वा चोत्तरायां वा गच्छेतां गुरुशिल्पिनौ
सर्वातोद्य समायुक्तं नृत्तगेय समाकुलम् ७
मनाभक्तजनैस्सार्धं ततोमङ्गळवाचकैः
शुभाशुभनिमित्तानि तस्मिन्काले तु लक्षयेत् ८
वृषभं पूर्णकुम्भं च शङ्खजां सन्ध्यजङ्गमम्
अन्याश्च पद्मं पुष्पं च दीपं वै भेरिका दधि ९
सितपुष्पक्षितीशं च वैश्यस्त्री चित्रपल्लवे
ब्राह्मणं शुभवाक्यं च दीपाग्निं तुरगं फलम् १०
शुभानेतानि सर्वाणि गन्तव्यन्तु प्रदर्शने
काकस्यरोदनं चैव शिवारुतं क्षुतन्तथा ११
शुभप्रदारिवामे तु सर्वसिद्धिकराणि हि
कररञ्च शशिञ्चैव डुण्डुभञ्च वराहकम् १२
श्येनं च कौशिकं चैव दक्षिणाद्वामगं शुभम्
जराङ्गं रक्तनेत्रं च जम्बूकं नकुलं खरम् १३
शुभान्येतानि सर्वाणि वामदक्षिणगानि वै
अमङ्गलीं प्रेतरूपं च पतितं क्षुधपीडितम् १४
विकीर्णकेशं मुण्डं च शक्योरमूढकान्तथा
एतानि चाशुभान्येव सर्वदोषकराणि च १५
एतानि भौमजानिस्युरन्तरिक्षानि चोच्यते
शब्दो यदि जायन्ते ---- १६
आन्तरिक्षानि चेतानि दिव्यानि तु वदाम्यहम्
विद्युत्स्तनित निर्घोषं सादित्यं वृष्टिपातनम् १७
गुह्येन ते च विज्ञेयास्सुशुभानि निबोधतः
उल्कापातं महावातप्रवर्तनं परिवर्षकम् १८
असृक्पात तारा पद्मेन्द्र चापके ----

सुनिमित्तं भवेद्गच्छेद्दुर्निमित्ते तु नव्रजेत् १९
हिमवान्हेमकूटं च निषधोनिलमेव च
रुद्रं च माल्यवन्तं च श्रीशैलं च तथैव च २०
मेरुं च ---------
एते पर्वत राजानो महाशैलाः प्रकीर्तिताः २१
महेन्द्रो मलयश्चैव सिंहबन्धे तथैव च
अप्सुदेव्युदरं चैव पारियात्रन्तथैव च २२
श्री पर्वतमिति ख्यातम् वेदपर्वतमेव च
एषामेव तु सामीप्य वनेषूपवनेषु च २३
भूमिश्चतुर्विधा ज्ञेया शुभदा च शुभङ्करी
यत्र गुल्मयुतं स्निग्ध फलपुष्पसमन्वितम् २४
तोयं च बहुदृश्यन्ते वारुणीस्यात्क्षिति स्मृता
तत्र गृहीता यत्नेन वारुणी वारुणी तथा २५
ततोयं क्रीडते लिङ्गं तत्स्यात्सर्वार्थसाधकम्
यस्यास्तु सौम्ये केतौ य व्रीहिक्षेत्रन्तु दक्षिणे २६
कुक्षिरद्रिश्च पूर्वे वा --- पश्चिमेपि वा
तत्र स्थाश्च विलासेना माहेन्द्री सा शिला श्मृता २७
धनधान्य प्रवृद्ध्यर्थं लिङ्गमेव मुदाहृतम्
पलाशखदिरानिम्बखादिरश्चार्कसम्युतम् २८
मयूरभ्रमराकीर्णा वल्पतोयेदामन्विता
अनिलान्ता विजानीयाशिला तत्र विनिःसृता २९
तावुभौ च ---- ग्राह्य ----
----- वाभिचारायकलितम् ३०
फिलुश्लेष्मातकाकीर्ण खदिरस्तु हिनाकुला
पिच्छिला काकबहुळा कठिना शर्करान्विता ३१
तृणोदक विहीनार्थ इतरकूरसेविता

जम्बुका यत्र दृश्यन्ते तथैव मृगतृष्णिका  ३२
तत्र स्थाया शिला साप्तु आग्नेया च प्रकीर्तिता
तया लिङ्गन्न कुर्वीत पण्डितश्शुभकर्मणि  ३३
विपरीतानुकर्तव्या शत्रेण शायनान्य सा
एवं परीक्ष्य भूमिन्तु शिलां गृह्णीत देशिकः  ३४
सरित्सलिल निर्धूतां पवित्रान्तर्जलोषिताम्
श्रमच्छायोपगूढां च तीर्थाश्रमनिषेविताम्  ३५
आयाम परिणाहाढ्यां सर्वदोषविवर्जिताम्
अदृश्यशीलवां ग्राह्य दृश्यं चैव विवर्जयेत्  ३६
यस्मिन्देशे शिला शेते प्राङ्मुखस्तं प्रतिबुधः  ३७
ततः प्रदक्षिणं कृत्वा शिरसादीनि लक्षयेत्
पूर्वपश्चिममायामन्तथावै दक्षिणोत्तरम्  ३८
पूर्वमग्रमिदं प्रोक्तं पश्चिमं मूलमुच्यते
दक्षिणे मूलमित्युक्तं उत्तरञ्चाग्रमेव च  ३९
शिरोभागं मुखं ज्ञेयम् अधोभागं विशेषतः
दृश्यभागन्तु पृष्ठं स्यात्पार्श्वौ पार्श्वमिति स्मृतम्  ४०
निरुतैकाशमायाममिनीलनलगन्तथा
ऐशाग्नेय शिरः प्रोक्तौ पृष्ठकावितरावुभौ  ४१
लाञ्छयित्वाङ्कितन्तत्र तस्थलं लक्षमारभेत्
आचार्यश्शिल्पिभिस्सार्धम् शिलामुद्धारयेत्क्रमात्  ४२
कुन्देन्दु हैमधवळाशङ्खनिभा नागदन्तनिभा दधिसमा
सितवस्त्राभाविप्रशिला शेषशुक्लसमा  ४३
बालार्कपङ्कजाभावरोचतरुद्रबन्धूकरपुष्पसङ्काशा
कुञ्जेन्द्रकोपसदृशाक्षत्रशिला शेषरक्तसमा  ४४
कनकहरिद्राभाहरितारविभा सुकर्णिकराभावण-
कादीपिता वर्णाशुभा शैलवैश्य जातिसा ।

नीलयुगराजावर्त्ताम्बरनीलनीरदासिनिभा बहि-
र्गळाकाराभा यच्छैलं शूद्रजातीनाम् ४५
मरकतशुकनिभदूर्वाश्यामाङ्गि वैणुका भासा ४६
हरितश्वेतयुता या सा शिला सर्वजातीनाम्
अनुलोमात्क्रमाद्ग्राह्या प्रतिलोमक्रमान्नहि ४७
अनुलोमप्रतिलोमानां सर्वकर्मक्रमात्कृतम्
क्रमस्थापुन्नपुंसका शैला बालावृद्धा तु मध्यमा ४८
अष्टाश्रा चतुरश्रा वा स्त्रीशिलावेति निश्चिता
वृत्तन्नपुंसकं शैलं द्वादशाश्रन्तु कोणकम् ४९
आयताश्रं च पुंल्लिङ्गं वृत्तायतन्तथैव च
घणटा शब्दा तु पुंल्लिङ्गं स्वरहीना तु पुंसकम् ५०
तालशब्दा शिला या तु साशिला युवति स्मृता
दीर्घशब्दा तु या ह्रस्वा साऽबला इति कीर्तिता ५१
एवं स्वरूपन्नपुंसका ब्रह्मकूर्चशिला स्मृता
प्रासादतलकस्यादौ नपुंसकशिलान्नयेत् ५२
पुल्लिङ्गे कल्पिता पिणडी राजराष्ट्रभयङ्करी
नपुंसकेन लिङ्गं वा पिणिडका वा कृता यदि ५३
दुर्भिक्षन्तु भवेद्भूमौ यजमानो विनश्यति
रेखाबिन्दुकळङ्कानि फमरुं परिवर्जयेत् ५४
वृष्टिपावमकारो वै त्रिविधस्मृता ---
स्तनचूचुकसङ्काशं जम्बूफलसमप्रभम् ५५
बिन्दुरेवं समाख्यातो द्वै सं बिन्दुरिति स्मृतम्
बर्हिपिञ्छसमाकारं कृष्णाभ्रकसमप्रभम् ५६
कृष्णलोहबदाकारं कळङ्कं त्रिविधं भवेत्
त्रासं स्फटिकसङ्काशं भुक्त्यभ्यन्तरसम्युतम् ५७
त्रासं च द्विविधं ज्ञेयं विमलं त्रिविधं भवेत्

शातकुम्भनिभञ्चैव बदरीक समप्रभम्  ५८
कासाभं विमलं ज्ञेयं सर्वदोषकरं भवेत्
वेणवङ्कुरवदाकारा लूतपातसमप्रभा  ५९
खर्जूरपत्रसङ्काशा ऊर्ध्वस्तंबक सन्निभा
इक्षोरग्रसमाकारा हरिका पञ्चधा स्मृता  ६०
कृष्णशैलसितेनैव साप्रशस्तेति कीर्तिता
कृष्णे कृष्णविनाशं स्यात्सिते कृष्णं सुगर्हिता  ६१
हरितं कृष्णशैले तु सितवर्णनिदर्शिता
अन्याकृतीर्न गृह्णीत धान्यगो नाशनाय च  ६२
कळङ्कं रोगदं ज्ञेयं त्रासं राष्ट्रविनाशनम्
बिन्दुश्च पुत्रनाशं स्याद्विमलन्दुःखसम्भवम्  ६३
बाह्यलक्षणमुद्दिष्टं श्रुणुष्वाभ्यन्तरन्ततः
चतुरश्रशिलां सम्यक्छेदयेत्तु विचक्षणः  ६४
तत्क्षणं छेदने प्रोक्तं मण्डलत्रय दृश्यकम्
सगर्भान्तां विजानीयाद्यत्ने तु परीक्षयेत्  ६५
मञ्जिठवर्णे मण्डूकं कर्कटे हरितालकम्
पीतं गोधा सितं सर्प खद्योतम्मयुवर्णके  ६६
कापिले मूषकं विद्यात्कृकलासमथारुणे
गुणवर्णे तु पाषाणे कपोत ग्रहतौ ळिका  ६७
भस्माभे भसितं विद्यात्स्फटिकाभे तु जलम्
रत्नमण्डलके चित्रं चित्रवर्णे तु वृश्चिकम्  ६८
शफरं कृष्णचित्रे तु किंशुकाभेंद्रकोपकम्
एवं गर्भे तु विज्ञेयं बाह्यलक्षणलक्षितम्  ६९
लक्षणन्नास्तिचेद्बाह्ये लेपनाल्लेपयेत्तथा
ब्राह्मणं वज्रपाणिं च शूलपाणिं च वैष्णवम्  ७०
अजाक्षीरेण संयोज्य उपलं लेपयेत्ततः

लेपने यदि क्लिन्नं स्यादेकरात्रोषितन्तथा ७१
सगर्भान्तां विजानीयादहिगोधा सुवृश्चिकम्
कासीसम्पीतलोग्रं च गोक्षीरेण तु पेषयेत् ७२
लेपिता तु शिला तेन रुधिरा भा यदा भवेत्
दिवसैश्च त्रिभिश्चैव एकरात्रोषितोऽपि वा ७३
दुदरन्तत्र विज्ञेयं अवसाधनसंशयम्
पृथ्वीति शूलिनं ब्रह्मचं महिषीक्षीरपेषितम् ७४
लेपितेन शिलातेन रुधिरा भा यदा भवेत्
कृष्णमीतो भवेत्तत्र कृकलासमथापि वा ७५
लूस्तरं करवीरं च कुष्ठं मांसी फलत्रयम्
एतानि लक्षयित्वा तु स्त्रं स्तद्येनैव घोषयेत् ७६
आत्मश्मानं लेपयेत्तेन यति स्या समिसीयते
काळकूटविषन्तत्र न तु हस्तेन संस्पृशेत् ७७
गृहीणां लक्षणं ह्येवं लक्षणं च समारभेत्
शोधयित्वा भुवं पश्चात्तत्समीप प्रवेशिकम् ७८
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन्
गन्धपुष्पैस्तथा पूज्य वस्त्रेण वेष्टयेत् ७९
तस्यैव पूर्वभागे तु होमकर्म समाचरेत्
समिदाज्येन मन्त्राणां प्रत्येकन्तु शताहुतिम् ८०
हृदयेन तत --------------
ततस्स्विष्टकृतं हुत्वा परिषेकान्तमाचरेत् ८१
शिलां प्रदक्षिणीकृत्य दिक्देवानां बलिन्ददेत्
एकरात्रौ वसेत्तत्र स्वप्नमाणवकं जपेत् ८२
ओं नमश्शम्भो त्रिणेत्राय पिङ्गळाय महात्मने
वीरमाया विरूपाय स्वप्नाधिपतये नमः ८३
आचचक्ष्वमहादेव प्रपन्नोस्मितवान्तिकम्

स्वप्ने कल्याणि ----- हृदिस्थानि भयानि मे ८४
ओं हलि हलि ------ शूलपाणये स्वाहा
दुस्वप्नानि द्विजश्रेष्ठ ब्राह्मणेभ्यो निवेदयेत् ८५
दुस्वप्ने च जपेद्धीमान् पशुपतसहस्रकम्
वस्त्राङ्गुळीयकैश्चैव तोषयेद्गुरुशिल्पिनौ ८६
शिलां सम्यग्गृहीत्वा तु ङ्गिं कुर्यात्तु बुद्धिमान्
लिङ्गलक्षणम्
गर्भं विंशति भागैश्च भजेद्दशाधमं भवेत् ८७
रुद्रांशं मध्यमं ज्ञेयं रव्यंशं चोत्तमं भवेत्
श्रेष्ठकन्यसयोर्मध्ये एतद्गर्भमिति स्मृतम् ८८
विभजेदष्टधागर्भं समसूत्रं विचक्षणः
एवं कृते भवेत्तत्र नवलिङ्गानि सुव्रते ८९
गर्भमानमिति प्रोक्तं हस्तमानन्ततश्शृणु
एकादिनवहस्तान्तं षडङ्गुलविवर्धनात् ९०
आयामन्तु त्रयत्रिंशत्संख्येयं परिकीर्तितम्
एकहस्त प्रमाणात्तु हीनलिङ्गन्न कारयेत् ९१
पञ्चहस्तं समारभ्य हर्म्याणान्तु विशेषतः
हस्तमानेन लिङ्गन्तु कारयेद्देशिकोत्तमः ९२
एवं लिङ्गोच्छ्रयं प्रोक्तं वक्ष्ये लिङ्गस्य विस्तरम्
लिङ्गस्योत्सेध दानार्थं अष्टधा विभजेत्ततः ९३
विष्कम्भं पञ्चभागं स्यात्कारयेच्चतुरश्रकम्
अधस्ताच्चतुरश्रन्तु ब्रह्मभागन्तदुच्यते ९४
अष्टाश्रं मध्यमं ज्ञेयं विष्णुभागन्तदुच्यते
ऊर्ध्वं सुवृत्तभागन्तु रुद्रांशमिति कीर्तितम् ९५
नपुंसकं ब्रह्मांशं विष्णवंशं स्त्रीति कीर्तितम्
तत्पुमान्वृत्तभागं स्यादेवं सङ्कल्पयेद्भुदा ९६

अर्धकार्कस्य कर्णांशमष्टाश्रं परिकीर्तितम्
अथवान्य प्रकारेण वक्ष्ये वस्वश्रकस्य तु ९७
चतुरश्रन्तु सप्तांशं मध्यपट्टमथापि वा
अष्टाश्रन्तु भवेत्सिद्धं अश्रच्छेदेन वर्तुळम् ९८
वृत्तलिङ्गस्य चायामं नाहन्तत्सममुच्यते
श्रेष्ठोक्तमस्य लिङ्गस्य विस्तारं हि विधीयते १००
तत्तार पञ्चभागैकं विभजेद्वसुभागकम्
विस्तारमष्टलिङ्गानां एकैकन्तु विहीनकम् १०१
त्रिगुणीकृत्य विष्कम्भं भजेत्तारन्तु पञ्चधा
भागन्तेन समायोज्य सर्वेषान्नाममुच्यते १०२
समखण्डं वर्धमानं शैवाधिक्यं त्रिराशिकम्
लिङ्गं चतुर्विधं ज्ञेयं द्विजानीनां यथाक्रमम् १०३
वर्धमानशिवाधिक्ये सर्वजात्यर्हकं भवेत्
चतुःपञ्चषडंशन्तु पञ्चषट्सप्तभागिकम् १०४
षट्सप्तांशकन्तत्र सप्ताष्ट नवभागकम्
लिङ्गं चतुर्विधं ज्ञेयं द्विजानां च यथाक्रमम् १०५
त्रिभागं सममेवोक्तं समखण्डं प्रकीर्तितम्
लिङ्गस्योत्सेधमानन्तु चतुर्भागे युगांशकम् १०६
एवं शिवाधिकं प्रोक्तं द्विजातीनामनुक्रमात्
आयामार्धं भवेदष्टविभागन्तु शिवांशकम् १०७
पर्वतारं भवेद्विष्णुस्तस्मात्सद्विगुणो हरः
अग्रे मूले च मध्ये च प्रमाणं सर्वतस्समम् १०८
आयामन्नवधाकृत्वा वृत्तं षट्भागमुच्यते
सप्तभागमथाष्टाश्रञ्चतुरश्रम्मुखागतम् १०९
त्रैराशिकमिति ज्ञेयं धनधान्यसुखावहम्
धारालिङ्गमथो वक्ष्ये श्रूयतान्तत्प्रचक्षते ११०

पादादूर्ध्वगपर्यन्त धारालिङ्गं प्रशस्तकम्
अथो वेदाश्रकं कुर्याच्चतुर्विधन्तदुच्यते ११९
छत्राकारन्तु विप्राणां नृपाणां कुक्कुटाण्डकम्
वैश्यानां चैव खण्डेन्दुश्शूद्राणां त्रिपुरुषाकृतिः ११२
कृत्वालिङ्गशिरस्तारं विश्वभागेन सद्बुधः
सार्धेनैव द्विभागेन वर्तयेत्त्रिपुषाकृतिम् ११३
विस्तारन्तु त्रिधा कृत्वा द्विभागेन तु वर्तितम्
अर्धचन्द्रमिति प्रोक्तं सर्वकामफलप्रदम् ११४
कुक्कुटाण्डं भवेत्तत्र विस्तारार्धेन वर्तितम्
छत्रन्तु शीर्षमित्युक्तं सर्ववर्णेषु योग्यकम् ११५
मानहीने महाव्याधि रधिके शत्रुवर्धनम्
नाहहीने दरिद्रं स्याच्छिरोहीने धनक्षयम् ११६
मूलहीने विनाशं स्यात्सूत्रहीने कुलक्षयम्
तस्मात्सर्वप्रयत्नेन कारयेल्लक्षणान्वितम् ११७
मुखलिङ्गमथो वक्ष्ये सर्वकामार्थसाधनम्
पूजाभागसमस्तन्तु षष्ठ्यंशन्तु भजेत्क्रमात् ११८
त्रयोदशाङ्गुलार्धन्तु मुखमेकं प्रकीर्तितम्
यस्य लिङ्गस्य विस्तारं द्विगुणं पादशैलकम् ११९
अधमन्त्विति विज्ञेयमध्यर्धं कन्यसं भवेत्
समं वै चतुरश्रं च तदर्धं च चलं भवेत् १२०
प्रासादमध्यसूत्रे तु किंचिद्वामेन योजयेत्
मध्यमे ह्यवटं कुर्याल्लिङ्गविस्तारमानतः १२१
अथाश्रमविस्तारं गर्भेणार्धार्धमुच्यते
ब्रह्माङ्गेन प्रवेशं हि ज्ञात्वा ब्रह्मशिलोच्छ्रयम् १२२
श्वभ्राव गाढकन्त्यज्य ब्रह्माङ्गकन्तथैव च
नन्द्यावर्तशिलां योज्य चत्वारि युगदिक्ष्वपि १२३

पूर्वपश्चिमधामान्तन्तथा वै दक्षिणोत्तरम्
पश्चात्पश्चिम पूर्वन्तु तत्पश्चाद्दक्षिणोत्तरम् १२४
लिङ्गस्य द्वभ्यतारेण देवं तस्यार्थ विस्मृतम्
तत्रोर्ध्वे पिण्डकायाधो बन्धयेदष्टबन्धनम् १२५
पादाधारपदे मध्ये स्थापयेल्लिङ्गमुत्तमम्
पादान्नपुंसकां शैलां चूर्णैरपि सुबन्धयेत् १२६
प्रदक्षिणक्रमेणैव योजयेत्तु विचक्षणः
शैललिङ्गमिति प्रोक्तं रत्नलिङ्गमथ श्रुणु १२७
द्विविधन्तत्समुद्दिष्टं चलञ्चैवा चलन्तथा
स्थितप्रासादलिङ्गन्तु चलञ्चैवाचलन्तथा १२८
स्थितप्रासादलिङ्गन्तु चलं सर्वैश्च पूज्यते
मस्तकं पुष्टिदं ज्ञेयं पद्मरागं जनार्थकम् १२९
आयुष्यसिद्धिर्वैडूर्यं स्फटिकं पुत्रवर्धनम्
स्तंभनं पुष्यरागं च राष्ट्रवश्यं प्रवाळकम् १३०
आकर्षं वज्रमित्युक्तं माणिक्कं सर्वसिद्धिदम्
इन्द्रनीलन्तु मोक्षार्थं रत्नानान्तु फलं भवेत् १३१
अङ्गुलादि वितस्त्यन्तं कुर्याल्लिङ्गन्तु रत्नजम्
आयाम सदृशन्नाहं शिरोवर्तन सम्युतम् १३२
स्वप्रमाणेन कर्तव्यं रत्नलिङ्गस्य पिण्डका
पिण्डका स्वस्वयोनिस्यात्तदभावे हिरण्यकम् १३३
राजतं तांम्रजं चैव अधमं चेति कीर्तितम्
चतुरश्रं वाथ वृत्तं चललिङ्गस्य पिण्डका १३४
आयामत्रिगुणार्धं वा द्विगुणन्त्रिगुणन्तु वा
विस्तारन्तत्समं ज्ञेयं शेषं पूर्वोक्तवत्कुरु १३५
लिङ्गायाम त्रिभागेकं पीठमध्ये तु स्थापयेत्
सर्वत्र वृत्तकं लिङ्गं त्रिभागं सूत्रवर्जितम् १३६

रत्नजं लिङ्गमाख्यातं लोहजं लिङ्गमुच्यते
--- ले निमग्नमेकांशमेकांशं पीठबन्धनम् १३७
त्रिसूत्रेण विनाकुर्या चतुरष्टाश्रवर्जितम्
लोहलिङ्गमिति ख्यातं मृल्लिङ्गं च ततः श्रुणु १३८
पर्वताग्रे नदीतीरे पुण्यक्षेत्रे मनोरमे
लिङ्गार्थमृत्तिका ग्राह्या प्रशस्ता सर्वकामदा १३९
श्वेतं रक्तन्तथा पीतं कृष्णां चैव मनोरमाम्
श्लक्ष्ण चूर्णं च तत्कृत्वा पञ्चगव्येन मर्दयेत् १४०
कापिलं च घृतं क्षीरं दधिना तैलमेव च
यव गोधूमजञ्चूर्णन्तथा मृद्भिस्तु तत्समम् १४१
आहृत्य सर्वचूर्णानि मृत्तिका सहितानि च
मर्दयेत्तु विशेषेण मलाक्षावकुन्दरम् १४२
श्रीवेष्टं गुगुलुं चैव सर्जगन्धरसन्तथा
सृल्लोद्भवरसं ग्राह्यं एकीकृत्य विमर्दयेत् १४३
पञ्चनिर्यासंसंयुक्तं मासपक्षोषितन्तथा
तमोलिङ्गं प्रकुर्वीत शेषं मध्यमकन्यसम् १४४
पार्थिवं लिङ्गमाख्यातं पिण्डकातदलम्मयी
लिङ्गविस्तारमानेन त्रिगुणं पीठविस्तरम् १४५

परिवारस्थापनं वक्ष्ये यथा वित्तानुसारतः
अन्तर्मण्डलके कुर्यात्परिवाराष्टकानि च १
अथवान्य प्रकारेण अन्तर्हारे थवा पुनः
अन्तर्मण्डलके स्थाप्य वृषभम् २
एकद्वित्रिचतुर्दण्डं पञ्चाष्टनवदण्डकम्
दशद्वादशदण्डान्तं वृषभं पीठकस्थितम् ३
पीठाग्रे दण्डकन्नीत्वा महोक्षं स्थाप्य तद्वति

प्रासादार्धेन वा कुर्यात्प्रासादसममेव वा ४
अन्तर्मण्डलकं कुर्यात्सत्रिहस्त समन्वितम्
भित्यन्तर प्रमाणेन परिवाराः प्रकीर्तिताः ५
वृषभं पूर्वतस्स्थाप्य दुर्गामाग्नेयके न्यसेत्
सप्तमातृगणान्वीरान्दक्षिणे स्थापयेत्ततः ६
नैर्ऋत्यां गणनाथस्य गजपृष्ठालयं कुरु
वारुणे च कुमारन्तु ज्येष्ठां च वायुदेशके ७
सौम्ये विष्णुं तथा स्थाप्य चण्डेशमीशतो न्यसेत्
अन्तर्मण्डलकं स्थाप्य तथात्रैव प्रकल्पयेत् ८
अथाष्टपरिवाराणां अन्तर्द्वारि कृतं यथा
ईशेन्द्रस्य च मध्ये तु क्षेत्रपाल वशान्नयेत् ९
अन्तर्मण्डलकेशान्यां चण्डेश्वरालयं कुरु
मर्यादभित्तिकं कुर्यात्परिवाराणि षोडश १०
इन्द्रादिलोकपालांश्च कल्पयेत्स्वस्वदेशतः
अश्विनी सप्तमातृंश्च वागीशकमलोद्भवौ ११
ज्येष्ठाचैवोरगेन्द्रं च क्षेत्रपालरविं क्रमात्
ऐन्द्रादिष्वग्निदिक्त्वन्तं अन्तराळे तु स्थापयेत् १२
द्वारार्थी यत्प्रतिच्छेद समपारं विनाशनम्
आलगर्भप्रमाणेन परिवारालयं कुरु १३
मन्दिरार्धसमं वापि तद्गर्भार्धसमन्तु वा
विस्तारद्विगुणोत्सेधं ह्यालयानां विधीयते १४
तत्तारुणभागेकं गर्भन्तत्र प्रकल्पयेत्
विभजेद्दशधातारं रसांशं गर्भविस्तरम् १५
मण्टपन्तु चतुर्द्वारमृषभालयमिष्यते
स्वस्तिदुर्गा धामन्तु शालाकारं मातृणाम् १६
हस्तिपृष्ठं गणेशस्य गुहालयं कूटं भवेत्

ज्येष्ठाधामं गृहाकारं विष्णुकान्तं हरेः कुरु १७
नन्द्यावर्तं च ईशान्यां चराडेशं भास्करन्तु वा
पश्चिमद्वारहर्म्ये तु स्थापयेत्पश्चिमे वृषम् १८
कुमारं पूर्वदेशे तु विन्यसेत्तु विशेषतः
सूत्रस्थं वा पदस्थं वा परिवारालयं भवेत् १९
सर्वेषां परिवाराणां मराटपाकृतिरेव वा
सुगाकृति विमानी वा नन्द्या वर्ताकृतिर्भवेत् २०
स्रालया कृतिकं वापि च्नेत्राणामीशगोचरे
स्रन्तर्हारादिभित्त्यन्तं ईशानं च्नेत्र विन्यसेत् २१
प्रासादाभिमुखं कुर्यात्परिवारवासकम्
सर्वेषां परिवाराणां पूजाभागसमन्तु वा २२
प्रतिमा लच्नणोक्तेन कारयेत्परिवारकम्
बिंबोदयस्य पच्नांशं वोमाशं पिरिडका भवेत् २३
प्रतिमानां भवेत्पीठं स्रपकर्ष -----
विमानेन युतं वापि विनावांस्थापयेत्सुधीः २४
पच्नताल युतं वापि क्रियाकालमथापि वा
विस्तारार्धसमुत्सेधं विस्तारसममेव वा २५
द्विमेखलयुतं वापि एक मेखलमेव वा
चतुरङ्गुलषट्चैव मेखलापद्मसम्युतम् २६
स्रन्यङ्गुलप्रमाणेन कर्णिकां संप्रकल्पयेत्
वृत्तं वा चतुरश्रं वा एवं पीठं प्रकल्पयेत् २७
प्रतिमा प्रतिष्ठा यत्कार्यन्तत्कार्यं प्रतिमा भवेत् २८
इति योगजे क्रियापादे परिवारस्थापनन्नाम त्रयोविंशतितमः पटलः

स्रथ वच्ये विशेषेण स्राचार्यलच्नणं श्रुणु
शैवं पाशुपतं चैव सोमं लाकुळमुच्यते १

एतानि शैव भेदानि तन्त्रेणैकेन कर्तव्यम्
एतेषु शैव भेदेषु स्थापनादि क्रियातथा २
एतैश्च दीक्षितस्स्वेषु सर्वं वै स्थापनादिकम्
एकान्यनेकधा भेदं ----- ३
मन्त्रमेकं समाख्यातं पाशुपतमन्यतन्त्रकम्
पाशुपतादि तन्त्राणां तन्त्रसङ्करमुच्यते ४
यत्तन्त्रेण तु प्रारब्धं तत्तन्त्रेणावसानकम्
अनुक्तमन्यतन्त्रैस्तु तन्त्रकर्मसमाचरेत् ५
प्रथमन्तु तवान्या यत्नात्तदवसानके
अन्येन यत्कृतं कार्यमाचार्यसङ्करं भवेत् ६

रत्नानान्नवकन्यासन्तथा नयन मोक्षणम्
जलाधिवासनं यानं शयनं स्थापनं विना १
नृत्तमूर्ति प्रतिष्ठोक्त मार्गेणैव समाचरेत्
ततोक्षिमोक्षणं कुर्यान्नेत्रयुग्मयुते दिने २
स्थण्डिलन्तु प्रकर्तव्यं शालिभिर्विमलैश्शुभैः
पूर्वाभिमुखं विघ्नेशं स्थापयेत्स्थण्डिलोपरि ३
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत्
आसीनं मण्डलं लिख्य दृष्टिर्मण्डलमालिखेत् ४
ज्योतिर्मण्डलमालिख्य कुर्याच्छिल्पिविसर्जनम्
तदग्रे स्थण्डिलं कृत्वा बिम्बन्तत्रैव विन्यसेत् ५
तर्जन्यनामिका मध्यैन विचन्द्रानस्थापितैः
सुवर्णनखरसम्युक्तं अङ्गुळिं च क्रमेण तु ६
मध्वाज्य सूक्तमुच्चार्य दर्शयेच्च क्रमात्सुधीः
धेनुं गोर्धेनुहव्ये तु ब्रह्मसूक्तेन भूसुराः ७
प्रच्छन्न पटमावर्ज्य जनसङ्घान्प्रदर्शयेत्

आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः ८
स्नापयेत्पञ्चगव्येन अष्टमृत्सलिलैरपि
वस्त्रैराभरणैर्माल्यैर्भूषणैर्भूषणावहैः ९
सर्वतोद्य समायुक्तं सर्वालंकार सम्युतम्
ग्रामप्रदक्षिणं कृत्वा संप्रविश्य जलाशयम् १०
तत्तीरे स्थण्डिलं कृत्वा प्रतिमान्तत्र विन्यसेत्
नववस्त्रेण संवेष्ट्य मालाकूर्चसमन्वितम् ११
जलमध्ये प्रपां कृत्वा चतुर्गात्रसमन्वितम्
वितानध्वजसंयुक्तन्दर्भमालासमन्वितम् १२
शाययित्वा गळघ्ने तु जले तु फलकोपरि
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषिताम् १३
भवनस्याग्रतः कुर्यान्मण्टपञ्चतुरश्रकम्
धर्मरन्ध्राष्टहस्तं वा कलास्तम्भसमन्वितम् १४
मण्टपन्तु त्रिधाभज्य मध्य भागे तु वेदिका
रत्निमात्रसमुत्सेधन्दर्पणोदरसन्निभम् १५
कुण्डानि कल्पयेत्पश्चान्मानुषेषु पदेषु च
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनन्तु वा १६
दिशास्वम्बुजकुण्डानि विदिक्ष्वश्वत्थ पत्रवत्
प्राक्कुण्डं वेदिका मध्ये वृत्तं प्रधानकं कुरु १७
पञ्चाग्न्यायतनं चेत्तु योन्याकाराणि वर्जयेत्
मण्टपस्योत्तरे भागे स्थानश्वभ्रं प्रकल्पयेत् १८
उद्वास्य शिल्पिनं पश्चाद्गोमयेनोपलेपयेत्
मण्टपं भूषयित्वा तु भूसुरान्भोजयेत्ततः १९
उच्चिष्टन्तु ततोद्वास्य गोमयेनोपलेपयेत्
वास्तुहोमन्ततः कृत्वा पर्यग्निकरणं कुरु २०
पुण्याहं वाचयित्वा तु स्वस्तिसूक्तसमन्वितम्

सर्वातोद्य समायुक्तं सर्वालङ्कारसम्युतम् २१
जलादुत्तीर्य बिम्बन्तु स्नानश्वभ्रोपरिन्यसेत्
वस्त्रादीनप्यपोह्याथ गव्यैरेवाभिषेचयेत् २२
गन्धतोयेन संस्नाप्य शुद्धैरुद्धैरितिर्जपेत्
ईशानेन समभ्यर्च्य पीतवस्त्रेण वेष्टयेत् २३
कौतुकं बन्धयेद्धीमान् पूर्वोक्त विधिना सह
वेद्यूर्ध्वे स्थरिडलं कुर्यादष्टद्रोणैश्च शालिभिः २४
तराडुलोर्ध्वे तिलैर्दर्भैः परिस्तीर्य विशेषतः
शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात् २५
प्रोन्नयेत्पुरुषेणैव आपोहिष्ठेति मन्त्रतः
आचार्यश्शिष्यसंयुक्तो प्रागुक्तलक्षणान्वितः २६
नववस्त्रधरोष्णीषी हेमाङ्गुळीय सम्युतः
स्नानवेद्यास्समुद्धृत्य सर्वालङ्कारसम्युतम् २७
शन्नो देवीति मन्त्रेण विघ्नेशं शयनोपरि
शाययित्वा शिरो मन्त्री प्राक्शिरश्चोर्ध्ववक्त्रकम् २८
अर्चयित्वा ततः पश्चाद्रक्तवस्त्रेण वेष्टयेत्
पद्ममुद्रां प्रदर्श्याथ अंशुकाख्यां प्रदर्शयेत् २९
सर्वलक्षणसंयुक्तं कुम्भन्तत्र प्रकल्पयेत्
सकूर्चं सापिधानं च सवस्त्रं वारिपूरितम् ३०
विघ्नेशस्य शिरो भागे स्थापयेद्देशिकोत्तमः
तत्रैव पञ्चरत्नानि निक्षिपेद्धृदयेन तु ३१
विन्यसेत्कुम्भमध्ये तु विघ्नेशमूलमन्त्रकम्
खान्तं सान्तसमायुक्तं यान्तं माया समन्वितम् ३२
त्रयोदशान्तसंयुक्तं षष्ठस्वरसमन्वितम्
मूलमन्त्रमिदं प्रोक्तं विघ्नेशसंविजं यते ३३
खान्तेनैव समायुक्तं ब्रह्माङ्गानि प्रकल्पयेत्

गणेशं पुरुषाकारं गजकर्णं गजाननम्  ३४
महोदरं बृहत्कायं एकदन्तं त्रिलोचनम्
रौद्रनेत्रन्तु लम्बोष्ठं नागयज्ञोपवीतकम्  ३५
करण्डमकुटोपेतं सर्वाभरणभूषितम्
चतुर्दोर्दण्डसम्युक्तं दक्षिणेंकुशदण्डयुक्  ३६
पाशं च लड्डुकञ्चैव  वामभागे तु धारिणम्
करस्थ लड्डुकेनैव गजहस्ताग्रसम्युतम्  ३७
एतं गणेश रूपन्तु ध्यात्वा कुम्भे तु विन्यसेत्
पूजयित्वा तु गन्धाद्यैः पञ्चवक्त्रं प्रदर्शयेत्  ३८
द्रोणार्धतोयसम्पूर्णान्सूत्रादिभिस्समन्वितान्
हेमपाशाङ्कुशोपेतान्गन्धोदकेन पूरितान्  ३९
अभितस्तु घटानष्टौ स्थापयेदष्ट दिक्षु च
वरदं पूर्वकुम्भे तु वीरमाग्नेयकुम्भके  ४०
विघ्नेशन्दक्षिणे कुम्भे नैर्ऋत्यान्तु गजाननम्
भक्ष्यप्रियन्तु वारुण्याम् गजकर्णन्तथानिले  ४१
विनायकन्तु सौम्यायां लम्बोष्ठन्त्वीशगोचरे
विघ्नेशरूपवत्सर्वं विशेषमधुनोच्यते  ४२
पाशाङ्कुशधरास्सर्वे अभयवरदान्विताः
द्विनेत्राश्च द्विहस्ताश्च ध्यात्वा तत्तत्स्वबीजकैः  ४३
विन्यसेत्कुम्भमध्ये तु गन्धपुष्पादिभिर्यजेत्
गुळान्नं दापयेत्तेषां ताम्बूलन्दापयेत्पृथक्  ४४
परिवारघटानष्टौ उपवेदी परिन्यसेत्
सकूर्चौ सापिधानौ च सवस्त्रान्वारिपूरितान्  ४५
सुप्रभूतं सुवक्त्रं च वामनं शङ्खपालकम्
महावीरं भैरवं च वीरेशं चोग्ररूपिणम्  ४६
इन्द्रादीशानपर्यन्तं कुम्भमध्ये तु विन्यसेत्

शुक्लं कृष्णं हरीतालं श्यामं रक्तन्तु शाद्वलम् ४७
काश्मीरं धूम्रवर्णन्तु सुप्रभूतादिवर्णकम्
खड्गखेटकहस्तांश्च भीमरूपान्सुदंष्ट्रकान् ४८
सर्वाभरणसम्युक्तानूर्ध्वकेशाळकान्वितान्
द्विनेत्रान्कराळवदनान्स्वनामाद्यक्षरं यथा ४९
पूजयेत्तु विशेषेण गन्ध पुष्पादिभिः क्रमात्
इन्द्रादीन्द्वारपालादीन् उपवेदीन्द्रकन्नयसेत् ५०
सकूर्चान्सापिधानां च सवस्त्रान्वारिपूरितान्
वीरं च सव्यभागे तु महावीरं च दक्षिणे ५१
द्विभुजौ च द्विनेत्रौ च करपृष्ठौ च धारकम्
याम्ये पि यमहस्तौ च स्वनामाद्येन विन्यसेत् ५२
पूजयित्वा हृदा मन्त्री गन्धपुष्पादिभिः क्रमात्
दिशास्वध्ययनं कुर्यात्प्रागादिषु क्रमेण तु ५३
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमार्गतः
गणेशाग्निं प्रकल्प्याथ कुण्डं प्रतिविशेषतः ५४
समिदाज्य चरूँल्लाजान्सक्तुसाष्टापूपकम्
प्रियङ्गुकोद्रवञ्चैव प्रथुकं पनसन्तथा ५५
शमीखादिरमायूरांवुदुम्बरं सर्वदिक्षु च
बिल्वं चार्कन्तथा प्लक्षं न्यग्रोधं विदिशासु च ५६
पलाशन्तु प्रधाने स्यात्समिधः परिकीर्तिताः
सद्यादिचास्त्रपर्यन्तमन्त्रं चैव क्रमेण तु ५७
शतमर्धन्तदर्धं वा प्रके तु जुहुयात्क्रमात्
द्रव्यान्ते व्याहृतिं हुत्वा स्पृष्ट्वा तु प्रतिमां क्रमात् ५८
मूर्तिपास्स्वस्वदिक्भागे स्पृष्ट्वा स्पृष्ट्वा तु होमयेत्
गणानान्त्वेति मन्त्रेण मूलेनैव विशेषतः ५९
प्रत्येकं जुहुयान्मन्त्री प्रत्येकन्तु शताहुतिम्

एवं जागरणं रात्रौ प्रभाते विमले ततः ६०
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः
दक्षिणान्दापयेत्पश्चात् गोभूमिकाञ्चनैस्सह ६१
पञ्चनिष्काधमाज्ञेया द्विगुणामध्यमा भवेत्
त्रिगुणा चोत्तमा प्रोक्ता देशिकस्य तु दक्षिणा ६२
अर्धेन मूर्तिधारांश्च पूजयेद्विधिपूर्वकम्
शयनाद्बिम्बमुद्धृत्य वस्त्रादीनि व्यपोह्य च ६३
पूजयेद्गन्धपुष्पाद्यैः कुम्भान्सर्वांश्च देशिकः
अग्निं सम्पूजयेत्तत्र कुण्डं प्रति विशेषतः ६४
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिं च शिरसा स्विष्टमग्नेति मन्त्रतः ६५
हुत्वाग्निं च विसृज्याथ कुम्भस्नानं समाचरेत्
शयनाद्गणेशमुद्धृत्य स्नानवेद्युपरिन्यसेत् ६६
घृतशिरोर्पणं कुर्यात्प्रागुक्तविधिना शुभम्
अकारादिक्षकारान्तन्देहे च पूर्ववन्न्यसेत् ६७
पद्ममुद्रां प्रकल्प्याथ प्रतिवक्त्रं प्रदर्शयेत्
दिग्बन्धं चास्त्रमन्त्रेण कारयेद्दशदिक्षु च ६८
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत्
कुम्भानुद्धृत्य शिरसा बाह्यहर्म्यप्रदक्षिणम् ६९
कृत्वा बिम्बस्य चाग्रे तु स्थण्डिलोपरि विन्यसेत्
कुम्भाद्बीजं समुद्धृत्य प्रतिमाहृदि विन्यसेत् ७०
कुम्भस्थ जलधाराभिस्स्नापयेत्तु विनायकम्
अष्टमूर्तिर्घटेभ्यस्तु बीजान्यष्टासु दिक्षु च ७१
पीठाम्बुजे क्रमेणैव इन्द्रादीशान्तकन्न्यसेत्
तत्तत्कुम्भस्थतोयैश्च विघ्नेशमभिषेचयेत् ७२
पूजयेद्गन्धपुष्पाद्यैर्मूलमन्त्रेण देशिकः

हृदासर्वोपचराणि दापयेत्तु क्रमेण तु ७३
स्नपनं कारयेत्पश्चात्पूर्वोक्तविधिना सह
ईषदस्मिन्विशेषोस्ति शिवकुम्भं च वर्धनीम् ७४
व्यपोह्य मध्यमे कुम्भे विघ्नेशं संप्रपूजयेत्
पूजयित्वा विशेषेण प्रभूतहविषन्ददेत् ७५
गुळान्नं पायसान्नं च मुद्गान्नं च विशेषतः
भक्ष्याणि विविधान्यत्र गणानान्त्वेति दापयेत् ७६
भोजयित्वा ब्रह्मचारीन्तेषां भक्ष्यानि दापयेत्
विघ्नांश्च प्रार्थयेत्तत्र गणेशं च विशेषतः ७७
द्वारपालान्स्वदिग्भागे स्थापयेत्तु क्रमेण तु
पूजयेद्गन्धपुष्पाद्यैस्स्वनामाद्येन मन्त्रतः ७८
स्थापयेत्परिवाराणि अन्तर्मण्डलमध्यमे
पुरतो बलिपीठन्तु कृत्वास्मिन्सुप्रभूतकम् ७९
विन्यसेत्तेन मन्त्रेण पूजयेत्तु क्रमाद्बुधः
स्नापयेत्तु क्रमेणैव सुवक्त्रादीन्प्रदक्षिणम् ८०
नित्यार्चनविधिं वक्ष्ये सर्वसिद्धिकरं परम्
प्रागुक्तविधिना स्नात्वा सकळी करणं कुरु ८१
पूजाद्रव्याणि संहृत्य प्रोक्षयेत्पुरुषेण तु
द्वारदेशं समानीय पूजयेद्वार रक्षकान् ८२
पतङ्गस्योर्ध्वके लक्ष्मी मधस्तात्पृथिवीरुतः
पूजयित्वा यथा न्यायं प्रविश्याभ्यन्तरन्ततः ८३
स्नानशुद्धिं ततः कृत्वा मार्जनालेपनादिभिः
पात्रशुद्धिन्ततः कृत्वा यथा द्रव्याणि हेतिना ८४
पूजापर्युषितं सर्वं हृदयेन विसर्जयेत्
शैलजे लोहजे चैव मृण्मये तु पवित्रके ८५
आभासे च पटे कुर्याद्बिम्बशुद्धिं तदाहतत्

पटैश्शुद्धोदकेनाथ शुद्धिं कृत्वा विशेषतः ८६
आसनं कल्पयेत्पश्चादग्न्यादिविदिशासु च
धर्मज्ञानं च वैराग्यमैश्वर्यं च पादकम् ८७
अनन्तर्मादि गुळिकाः प्रोक्ताः पूर्वादियुगदिक्षु च
गुणत्रयेण सञ्छाद्य तस्योर्ध्वे आसनन्नयसेत् ८८
नवाक्षरमयं पद्मं पूर्वादीनि प्रदक्षिणम्
अकारादि क्षकारान्तन्दळेष्वष्टसु विन्यसेत् ८९
ओंकारं कर्णिकायान्तु पूजयेद्गन्धपुष्पकैः
तस्योर्ध्वे सद्यमन्त्रेण बहिश्शेते गजाननम् ९०
ध्यात्वा वसन्ततो रूपं मूलेन स्नानमाचरेत्
पाद्यन्दद्यात्तु सद्येन शिरसा चमनीयकम् ९१
अर्घ्यन्तु शिखया दत्त्वा गन्धं वामेन दापयेत्
दीपन्तु कवचेनैव दापयेत्तु विशेषतः ९२
प्रति द्रव्यं हृदा मन्त्री दद्यादाचमनीयकम्
वरन्दद्यादष्टमूर्तिः प्राग्दळादिषु विन्यसेत् ९३
स्वनामाद्यक्षरेणैव गन्धपुष्पादिभिर्यजेत्
गौळं वा पायसं मौद्गं शुद्धान्नं वा निवेदयेत् ९४
गुळाक्षतं गुलोपेतं उपदंशसमन्वितम्
फलानि चैव पक्वानि दत्वा देवाय चैव हि ९५
गणानान्त्वेति मन्त्रेण विघ्नेशाय निवेदयेत्
परिवारबलिन्दद्यात्स्वस्वमन्त्रेण बुद्धिमान् ९६
आचामनन्ततो दद्यान्नैवेद्यन्तु व्यपोह्य च
ताम्बूलन्दापयेत्पश्चाद्वक्त्रेणैव तु देशिकः ९७
चतुष्कालं त्रिकालं वा नित्यं सम्पूजयेत्ततः
नित्याग्निं कारयेद्धीमान् यौवनाग्नौ विशेषतः ९८
वृत्तं वा चतुरश्रं वा कुण्डन्तत्र प्रकल्पयेत्

ततो होमं प्रकुर्वीत वह्निसंस्कारपूर्वकम् ९९
आज्यं वामेन जुहुयादन्नं सद्येन होमयेत्
दशाहुतीश्च प्रत्येकं पञ्चब्रह्मषडङ्गकैः १००
व्याहृतिचैव द्रव्यान्ते कुर्याद्देशिकसत्तमः
एककालं द्विकालं वा त्रिकालं वा यजेद्बुधः १०१
तदन्ते चोत्सवं कुर्याद्विघ्नेशप्रतिमायुतम्
रुद्राङ्गुलसमायाममुत्तमन्तु विधीयते १०२
रुद्राङ्गुलसमायामम्मध्यमं चेति कीर्तितम्
विघ्नेश्वरस्वरूपन्तु प्रतिमालक्षणोक्तवत् १०३
एवं च उत्सवार्थन्तु प्रतिष्ठां पूर्ववत्कुरु
सर्वालङ्कारसंयुक्तं प्रतिष्ठां कारयेद्बुधः १०४
परिचारकमाहूय सोष्णीषं चोत्तरीयकम्
तस्य मूर्धप्रदेशे तु विघ्नेशं विन्यसेद्बुधः १०५
सर्वतोद्य समायुक्तं पिञ्छचामरसम्युतम्
नृत्तगेय समायुक्तं धूपदीप समाकुलम् १०६
प्रदक्षिणत्रयं कुर्या प्रासादं प्रतिमायुतम्
द्वारदेशं समानीय पादप्रक्षाळनं कुरु १०७
प्रविश्य गर्भगेहन्तु स्थापयेत्पूर्वदेशके
प्रायश्चित्ते तु सम्प्राप्ते प्रायश्चित्तोक्तवत्कुरु १०८
मन्त्रभेदो भवेत्तत्र क्रिया भेदो न विद्यते
एवं परार्धमाख्यातं आत्मार्थं श्रुणु सुव्रते १०९
प्रतिमायां पटे वापि स्वयमात्मनि योजयेत्
परिवारद्वारपूजाश्च हित्वा सर्वं समाचरेत् ११०
एककालं द्विकालं वा त्रिकालं वा यजेद्बुधः
एवं यः कुरुते मर्त्यस्सर्वपापात्प्रमुच्यते १११
निर्विघ्नं सर्वकार्येषु भयं सर्वं विनश्यति ११२

इति योगजे क्रियापादे विघ्नेशप्रतिष्ठाविधिर्नाम षड्विंशतितमः पटलः

अथ निष्पन्नलिङ्गस्य स्थापनं वक्ष्यतेऽधुना
प्रशस्तपुण्यनक्षत्रे विमले सूर्यमण्डले १
प्रतिष्ठां कारयेत्सम्यगाचार्यवरबुद्धिमान्
क्रमालये तु कर्तव्यम् लिङ्गं लक्षणवत्कृतम् २
शाणेन घर्षयेद्धीमान् सर्वलक्षणसम्युतम्
बिम्बं च कारयेद्धीमान् लक्षणोद्धारणं कुरु ३
निश्चित्य दिनपूर्वे तु अङ्कुरार्पणमारभेत्
पुण्याहं कारयेत्तत्र ब्रह्मघोष समायुतम् ५
तूर्यशब्दसमायुक्तं सुमङ्गळं सुशोभनम्
नृत्तगेयसमायुक्तं सर्ववाद्यसमायुतम् ६
अष्टद्वादशमात्रं स्यादङ्गुळीयकमष्टधा
यवमात्रनिमग्नौ तु रेखा चैव प्रमातृकम् ७
षोडशांशं भजेच्चैव हाटकद्वयमस्त्यजेत्
नवतालन्तदूर्ध्वे तु मुकुळं भागमुच्यते ८
भागमेकन्त्रिधा भज्य द्विभागन्तारमुच्यते
नाळायामन्तथास्तीर्य कृत्वा तत्पार्श्वयोर्द्वयोः ९
तस्माद्या मुकुळीयान्ते तेनसूत्रेण बन्धयेत्
एतयोस्तु समं कार्यं यावत्पृष्ठान्तगोचरम् १०
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं श्रुणु
शैवं रव्यंशकं भज्य ऊर्ध्वे गुणांशमुच्यते ११
तल्लिङ्गन्तु भवेत्तत्र अथ द्व्यंशन्तु कल्पयेत्
शेषन्नाळमिति प्रोक्तं ऊर्ध्वे तु मुकुळांशकम् १२
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं श्रुणु

शिवाङ्गैववभागन्तु ऊर्ध्वभागे द्वयन्त्यजेत् १३
मुकुळं चेकभागेन नाळं पञ्चाङ्गमुच्यते
अथो भागेंशकन्नीत्वा द्विरेखा पूर्ववद्भवेत् १४
शैवन्तु दशधा भज्य द्विभागमूर्ध्वतस्त्यजेत्
मुकुळमेकभागं स्यात्षड्भागन्नागमुच्यते १५
शेषभागमथस्त्यक्त्वा मणिरेखा तु मध्यमम्
चतुर्थं लक्षणं प्रोक्तं द्विरेखापृष्ठतस्समम् १६
स्थण्डिलं कारयेत्तत्र लाजदर्भैश्च सम्युतम्
लिङ्गन्तु स्थापयेत्तत्र प्राक्शिरश्चोर्ध्ववक्त्रकम् १७
वक्त्रं वस्त्रेण संवेष्ट्य पूर्वेद्युरधिवासयेत्
ततो होमं प्रकुर्वीत वह्निकार्योक्तवत्कुरु १८
प्रभाते विमले चैव लक्षणोद्धारणं कुरु
पश्चाल्लिङ्गं समुद्धृत्य नेत्रमोक्षणमाचरेत् १९
स्विष्टमग्नेति मन्त्रेण ततो होमं समाचरेत्
नाभौ सदाशिवं प्रोक्तं सव्यसूत्रमजाधिपः २०
वैष्णवं वामसूत्रं स्याददितिस्सूत्रदेवता
त्र्यम्बकेन मन्त्रेण मध्यसूत्रं प्रकल्पयेत् २१
ब्रह्मजज्ञानमन्त्रेण ब्रह्मसूत्रं प्रकल्पयेत्
इदं विष्णिवति मन्त्रेण विष्णुसूत्रं प्रकल्पयेत् २२
मधुवातेति मन्त्रेण मधुना संप्रकल्पयेत्
घृतम्मिमिक्षमन्त्रेण घृतं सम्यक्समाचरेत् २३
पश्चाल्लिङ्गं विसृज्याथ पञ्चगव्याभिषेचयेत्
अष्टमृत्सलिलेनैव पञ्चविंशद्घटान्तरे २४
गन्धादिभिस्समभ्यर्च्य रजन्या स्नानमाचरेत्
नाळिकेरोदकैस्स्नाप्य भस्मना पात्रशोभिते २५
नववस्त्रेण संवेष्ट्य गन्धपुष्पादिनार्चयेत्

जलाधिवासनं प्रोक्तं पञ्चसप्तत्रिरात्रकम्  २६
जलमध्ये प्रपां कृत्वा वितानस्तम्भवेष्टितम्
दर्भमालासमायुक्तं पुष्पमाल्यैरलङ्कृतम्  २७
नृत्तगेय समायुक्तं स्तोत्रमङ्गळवाचकैः
पिञ्छचामरसम्युक्तं पताकछत्रसम्युतम्  २८
तालवृन्तसमायुक्तं हरशब्दसमायुतम्
जलमध्ये तु फलके शाययेल्लिङ्गपीठके  २९
दर्भैरावेष्टय तंल्लिङ्गं पीठब्रह्मशिलैर्युतम्
नववस्त्रेण संवेष्टय ब्रह्मकूर्चमुमैर्युतम्  ३०
नित्यदीपसमायुक्तन्नृत्तगीतसमन्वितम्
त्रिसन्ध्यायां हविर्दद्यात्ताम्बूलेन समन्वितम्  ३१
प्रतिष्ठादिनपूर्वे तु जलादत्तीर्य यत्नतः
यन्त्रपीठाद्ब्रह्मशिलाकूर्माख्ये शिलया युतम्  ३२
जलादुत्तीर्य देवेशं सर्वतीर्थं समावहेत्
कुम्भादेकैस्तथा स्नाप्य पीठवर्धनिकां यजेत्  ३३
गन्धपुष्पादिभिः पूज्य मूलमन्त्रेण सम्युतम्
अष्टमृत्सलिलैश्चैव बिल्वपत्रैश्च वर्षयेत्  ३४
गन्धोदकैश्चाभिषिच्य रजन्यामलकादिभिः
हविर्निवेदं कृत्वा ताम्बूलेन समन्वितम्  ३५
वस्त्रैराभरणैर्भूष्य सर्वालङ्कारसम्युतम्
रथे वा शिबिकायां वा यानयेत्क्रमशः पुनः  ३६
सर्वालङ्कारसम्युक्तमाचार्यस्तु प्रदक्षिणम्
सर्वातोद्य समायुक्तं प्रविशेदालयं पुनः  ३७
यागमण्टपालङ्कारं वक्ष्यते विधिनायुतम्
आलयस्याग्रतः कुर्याद्दक्षिणे चोत्तरे थवा  ३८
प्रतिष्ठामण्टपं कुर्यान्नवाष्टसप्तहस्तकैः

षोडशस्तम्भसम्युक्तं द्वादशस्तम्भमेव वा ३९
वितानध्वजसम्युक्तं वस्त्राङ्गैः स्तंभवेष्टितम्
दर्भमालासमायुक्तं पताकध्वजसम्युतम् ४०
पूर्णकुम्भैरलङ्कृत्य नानादीपैस्समायुतम्
दूर्वाङ्कुरसमायुक्तं पुष्पपल्लवशोभितम् ४१
एवं मराटपालङ्कार सर्वद्रव्यैर्विचद्मणः
कन्यसत्रयलिङ्गानां कन्यसं मराटपं भवेत् ४२
मध्यमत्रयलिङ्गानां मध्यमं मराटपं भवेत्
उत्तमत्रयलिङ्गानां मराटपं ह्युत्तमम्भवेत् ४३
कूटं वापि प्रपां वापि सर्वत्र परिकल्पयेत्
मराटपस्योक्तमार्गेण कुराडं वेदीपृथक्पृथक् ४४
तस्य पश्चिमभागे तु उत्तरे वाथ कल्पयेत्
स्नानश्वभ्रं प्रकर्तव्यं लिङ्गानुरूपकं यथा ४५
दारुपीठं च सङ्कल्प्य उत्तरे शयनार्हकम्
एवं मराटपनिर्माणं वास्तुहोमं प्रकल्पयेत् ४६
वास्तुहोम विधानं च तन्मार्गेणैव कारयेत्
पर्यग्निकरणं कुर्यात्पञ्चगव्यं च प्रोद्मयेत् ४७
पुरायाहं वाचयेत्तत्र भूसुरान्भोजयेत्ततः
वेदिकोपरि विन्यस्य अष्टद्रोणैश्च शालिभिः ४८
तदर्धतराडुलैर्भूष्य तदर्धैश्च तिलैरपि
लाजपुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः ४९
अराडजम्मुराडजं चैव पञ्चवर्णं प्रकल्पयेत्
पुरायाहं वाचयित्वा तु रद्माबन्धन्तु कल्पयेत् ५०
सुवर्णसूत्रैरावेष्टय त्र्यम्बकेन मन्त्रतः
लिङ्गं पीठं समभ्यर्च्य ब्रह्मकूर्म शिलायुतम् ५१
रद्मासूत्रं च सम्बध्वा मूलमन्त्रं समुच्चरन्

ईशानेन तु मन्त्रेण शयने शाययद्बुधः ५२
प्राक्छिरश्चोर्ध्ववक्त्रं च शयने शाययेद्धृदा
मुकुळीं पद्ममुद्रान्तु सुरभी ताळमुद्रिकम् ५३
लिङ्गमुद्रां प्रकृत्वाथ पञ्चवक्त्रे प्रदर्शयेत्
रक्तवस्त्रेण संवेष्टय कूर्चपुष्पयुतेन च ५४
गन्धपुष्पादिभिः पूज्य सर्वतोद्य समन्वितम्
पीठं च नन्दिकावर्तं कूर्मशिलां च स्थापयेत् ५५
वेद्यूर्ध्वे लिङ्गमूले तु स्थापयेत्क्रमशस्ततः
वेष्टयेत्पीतवस्त्रेण गन्धपुष्पादिभिर्यजेत् ५६
शक्तिबीजमनुस्मृत्य पीठं कूर्मशिलान्तथा
ब्रह्मबीजमनुस्मृत्य ब्रह्मकूर्चशिलां यजेत् ५७
निष्कळंकानसुषिरान्द्रोणतोय प्रपूरितान्
त्रिसूत्रवेष्टितान्कुम्भान्नववस्त्रसुवेष्टितान् ५८
विधाय चक्रपात्राणि सूत्रेणैव विचित्रयेत्
स्वर्णपुष्पसमायुक्तं कूर्चगन्धसमायुतम् ५९
शिवकुम्भं च सम्पूज्य वर्धनीञ्चैव पूजयेत्
नववस्त्रेण सम्वेष्टय वस्त्रयुग्मयुतेन च ६०
देवस्यैव शिरो भागे कल्पयेदासनन्तथा
गन्धादिभिस्समभ्यर्च्य शिवकुम्भं च वर्धनीम् ६१
पञ्चरत्नसमायुक्तं ध्यानं सादाशिवेन च
सद्यमन्त्रेण चावाह्य स्वागतं हृदयेन तु ६२
स्थापयेद्वामदेवेन अघोरेण निरोधनम्
ईशानेन तु सान्निध्यं पुरुषेण तु सम्मुखम् ६३
पाद्यमाचमनं चार्घ्यं शिरोमन्त्रेण दापयेत्
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ६४
दापयेद्धृदयेनैव ताम्बूलन्दापयेत्ततः

दर्शयेद्दशमुद्रां च लिङ्गमुद्रान्तथैव च ६५
पञ्चवक्त्रं प्रदृश्याथ ईशानेन पिधाय च
अस्त्रेणैव तु मन्त्रेण दिग्बन्धं च ततः कुरु ६६
तस्यैव वामभागे तु वर्धनीं चैव विन्यसेत्
वर्धनी मध्यमे न्यस्त्वा मनोन्मन्यास्तु मन्त्रकम् ६७
अब्जमुद्रां प्रदृश्याथ सुरभीन्ताळमुद्रिकाम्
स्वर्णवक्त्रसमायुक्तं चक्रपात्रं विधाय च ६८
इन्द्रादीशानपर्यन्तमष्टविद्येश्वरान्नयसेत्
सवस्त्रान्सापिधानांश्च सवस्त्रान्हेमसंयुतान् ६९
अष्टमङ्गळरूपाणि उपवेद्युपरिन्यसेत्
विद्येशानान्तु रूपाणि गन्धपुष्पादिनार्चयेत् ७०
शिववक्त्रं च कुम्भानां वर्धन्याभिमुखं चरेत्
विद्येश्वरस्य कुम्भानां अष्टविद्येशधारकान् ७१
पूर्वोक्तलक्षणैर्युक्तपूर्वशैवस्तु देशिकः
पञ्चाङ्गभूषणैर्भूष्य वस्त्रैराभरणैर्युतः ७२
गन्धपुष्पैश्च धूपैश्च होमयज्ञेन सम्युतः
आचार्यो मूर्तिपैस्सार्धं वस्त्रहेमाङ्गुळीयकैः ७३
होमारम्भस्य पूर्वे तु सृक्सृवौ चेन्धनन्तुषम्
परिधीं चैव दर्भाणि समिदाज्यचरून्तथा ७४
लाजांश्च सर्षपां चैव --- द्रव्यां च कल्पयेत्
गन्धं पुष्पं च धूपं च दीपपात्राणि निक्षिपेत् ७५
विहरीक्रमसरळं चैव वर्धनीन्दर्विसम्युतम्
आहृत्य होमसंभारं कुण्डं प्रति विशेषतः ७६
आहूयमौदवान्सर्वान्होम कर्म समारभेत्
वृत्तकुण्डं प्रधानस्य स्थापको सौम्य होमयेत् ७७
अन्यकुण्डेषु सर्वेषु मूर्तिपा होमयेत्क्रमात्

तत्तदायुधकोपेत तद्बाह्ये विन्यसेत्क्रमात् ७८
वसून्धरादीन्विन्यस्य मरुतश्चैव विन्यसेत्
सर्वेषान्तु समायुक्तमुत्तमं होमकर्मणि ७९
अस्त्रं च दिक्पालानां सम्युतं होममाचरेत्
अग्न्याधानादिकं सर्वमाज्यभागान्तरं पृथक् ८०
होमं प्रतिविशेषेण अग्निकार्योक्तमाचरेत्
ऋग्वेदाध्ययनं पूर्वे यजुर्वेदन्तु दक्षिणे ८१
पश्चिमे सामवेदन्तु अथर्वेदन्तु चोत्तरे
विदिक्षुस्याद्धनुर्वेदन्देवताभिमुखं जपेत् ८२
कोणे मन्त्रजपं कुर्यान्मूलमन्त्रं विशेषतः
समिदाज्य चरूल्लाजान्मुद्गमाषयवान्तिलान् ८३
शालिगोधूमनीवारान्सक्तु सिद्धार्थकादिभिः
क्रमेण विधिवद्धुत्वा पृथक्द्रव्याणि होमयेत् ८४
पलाशञ्चेशदिक्भागे अश्वत्थोदुम्बराणि च
प्लक्षखादिरबिल्वानि शमी चैव पृथक्पृथक् ८५
इन्द्रादीशानपर्यन्तं क्रमशस्समिधो हुनेत्
प्रधानाग्नौ पलाशन्तु अश्वत्थो दुम्बराणि च ८६
सर्वेषां बाह्यकुण्डानां समिधस्संप्रकीर्तिताः
सद्येन समिधो हुत्वा मूलेनाज्यन्तु होमयेत् ८७
शालिमीशान मन्त्रेण गोधूममस्य मन्त्रकम्
शिखामन्त्रेण नीवारं कवचेनैव सक्तुकम् ८८
पाशुपतेन सिद्धार्था बीजमुख्येन वै दधिम्
दशाक्षरेण मन्त्रेण मुद्गान्तां जुहुयात्ततः ८९
अष्टाक्षिकत्रिशतकं द्रव्यं प्रतिहुतं भवेत्
उत्तमं होममाख्यातं मध्यमं द्विशताष्टकम् ९०
अष्टोत्तरशतन्नीचन्द्रव्यं प्रतिहुतं क्रमात्

द्रव्यं प्रतिस्पर्शनं कुर्याल्लिङ्गं मूलेन यत्नतः ९१
स्पृष्ट्वा स्पृष्ट्वा च मूलेन देशिको मूर्तिपैस्सह
ब्रह्मजज्ञानमन्त्रेण हुत्वा ब्रह्मशिलां स्पृशेत् ९२
मनोन्मन्यास्तु मन्त्रेण हुत्वा तां पिण्डिकां स्पृशेत्
प्रत्येकं षोडशं हुत्वा व्याहृतीं जुहुयात्ततः ९३
अष्टाधिकशतं हुत्वा क्रमशो होममाचरेत्
होमारम्भस्य काले तु क्रोधमोहविवर्जितः ९४
पूर्णाहुतिन्ततः कृत्वा दर्भान्सर्वांश्च होमयेत्
अग्निमुखं च पूर्वे तु युक्तोवहेति मन्त्रतः ९५
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
नृत्तगेय समायुक्तं रात्रिशेषं व्यपोह्य च ९६
ततः प्रभाते विमले आचार्यो मूर्तिपैस्सह
स्नानं कृत्वा विशेषेण शुक्लवस्त्रोत्तरीयकः ९७
शुक्लांबरधरोष्णीषी शुक्लमाल्यैरलङ्कृतः
शुक्लचन्दनदीप्ताङ्गो हाराद्याभरणैर्युतः ९८
पवित्र पाणयस्सर्वे हेमयजोपवीतकः
लिङ्गन्तु शयनात्पूज्य हविर्दत्वा विशेषतः ९९
यागदेवान्समभ्यर्च्य यामं प्रति हविर्ददेत्
ताम्बूलं मुखवासार्थं प्रददेच्छ्रद्धया बुधः १००
आचार्यश्शिल्पिना सार्थं प्रविशेद्गर्भगेहकम्
पूर्वपश्चिममार्गेण मध्ये सूत्रं प्रदापयेत् १०१
दक्षिणोत्तरमार्गेण सूत्रं सूर्योक्तमध्यमम्
पूर्वदक्षिणमार्गेण पुरस्तात्परपूर्वकम् १०२
याम्यसौम्यं तथा चैव द्वात्रिंशत्सप्तधा भवेत्
मध्यभागन्त्रिधा भज्य पक्षान्तं दक्षिणे त्यजेत् १०३
एकांशमुत्तरे त्यक्त्वा मध्यसूत्रन्तु पातयेत्

शिवसूत्रन्तथा ख्यातं तन्मध्ये स्थापयेच्छिवम् १०४
अन्यत्र स्थापनं लिङ्गं स्थाननाशं धनक्षयम्
मध्यमे स्थापितं लिङ्गं सर्वदोषहरं भवेत् १०५
शालिपिष्टोक्तसूत्रेण रक्तसूत्रेण वा पुनः
सूत्रमास्फालयेद्धीमान् स्थूलभित्त्यां क्रमेण तु १०६
भित्त्यभावे महाशासु यदि तु स्थापयेद्बुधः
शिवसूत्रं महाशासु तन्तुकोर्ध्वं प्रकल्पयेत् १०७
षण्डकायास्तु संलिप्य शिवसूत्रस्य मध्यमम्
अङ्कयेत्तु महाशासु सूत्रपातन्तु कारयेत् १०८
सकूर्चं कूर्चशैलं च प्रवेशाजपभावकम्
समं च कारयेद्गर्तं पीठविस्तारविस्तृतम् १०९
गर्तं समतलं कृत्वा निकृत्यैव पामतम्
अध्वद्भिस्तु समं कृत्वा वस्त्रेणैव तु शोषयेत् ११०
गर्भं यष्ट्वाग्रशैलन्तु शक्तिबीजेन विन्यसेत्
मध्यमं शिवसूत्रन्तु लम्बयित्वा विधिक्रमात् १११
कारयेत्प्रतिसूत्रन्तु स्थपतिर्याज्ञिकस्तथा
उपवीतं तथा कृत्वा श्वभ्रमध्ये तु विन्यसेत् ११२
प्रतिलिङ्गन्तु संस्थाप्य सुस्थितं बिन्दुपिण्डकाम्
प्रतिलिङ्गन्तु संस्थाप्य यवमन्त्राणि सन्त्यजेत् ११३
कूर्मशैलां गवान्शोध्य प्राशयेत्पुरुषेण तु
चन्दनेन तु लिप्याथ रत्नानि विधिवन्न्यसेत् ११४
वज्रं मरकतं चैव पुष्यरागं प्रवाळकम्
मौक्तिकं चैव वैडूर्यं स्फटिकं चेन्द्रनीलकम् ११५
इन्द्रादीशानपर्यन्तं विन्न्यसेन्मूलविद्यया
माणिक्यं मध्यमे स्थाप्य सर्वरत्नं क्रमान्न्यसेत् ११६
सुवर्णं रजतं तांम्रं आयसं त्रपुसीसकम्

अारकूटं च लैन्दवलाहकं च क्रमात्तथा ११७
हरितालं च त्रिफलं गन्धकं चारसाञ्जनम्
सौराष्ट्रं गैरिकं माक्षिकं पूर्वादिषु विन्यसेत् ११८
यव गोधूम नीवार शालिवैणवकानि च
प्रियङ्गुतिलमुद्गानि निष्पावं च क्रमात्तथा ११९
चन्दनं कुङ्कमं चैव क्रमेणैव तु विन्यसेत्
------ लोह पात्रं फलत्रयम् १२०
कर्पूरकमुशीरं च क्रमेणैव तु विन्यसेत्
वैणवं वज्रवाणी च वृषभं ध्वजमेव च १२१
लक्ष्मीं च सहदेवीं च शान्तिपुष्पं सुवर्चसम्
पूर्वा च सुमुखं चैव क्रमेणैव तु विन्यसेत् १२२
नीलोत्पलं पद्मगन्धम् काकलोक्यं च मुस्तकाम्
सर्वकन्दं च विन्यस्य भूतले तु विशेषतः १२३
पृथ्वीं तच्छातकुम्भं च सामुद्रराजतेन च
तांम्रेण वृषभं कृत्वा तोमरं चामरं गजम् १२४
श्रीवत्सं कलशं भेरीं दर्पणं पद्मपुष्पकम्
महामेरुं सुवर्णेन कृत्वा पूर्वादिषु न्यसेत् १२५
दक्षिणे मध्यमे सौम्ये पूर्वे चैव यथाक्रमम्
कन्दे चैव विनिक्षिप्य स्थापयेत्तु विशेषतः १२६
मुकुळीं पद्ममुद्रां च शोधनीं चैव वर्जयेत्
पूजयित्वा तु यत्नेन गन्धपुष्पादिभिस्तथा १२७
पायसेनाथ लिप्याथ पूज्यशालां पुनः पुनः
अासनं कल्पयेत्तत्र पञ्चासनक्रमेण तु १२८
पञ्चाङ्गभूषणान्यानि अाचार्याय प्रदापयेत्
दक्षिणान्दापयेत्पश्चाच्चतुष्षष्टिसुवर्णकम् १२९
उत्तमन्त्विति विख्यातं पञ्चाशन्मध्यमं भवेत्

त्रिंशन्निष्कं कन्यसं च मध्यम्मध्यमं भवेत्  १३०
अधमं मध्यमुद्दिष्टं विंशन्निष्कं हिरण्यकम्
दशनिष्कं मध्यमं च कन्यसं पञ्चनिष्ककम्  १३१
मूर्तिपान्पूजयेत्तत्र दशनिष्कादि निष्ककैः
एकन्निष्काधमं प्रोक्तं मूर्तिपानां सुदक्षिणा  १३२
यागोपकरणं सर्वमाचार्याय प्रदापयेत्
भूमिगोमहिषीत्यादि दासीदासाञ्च दापयेत्  १३३
भक्तानां परिचाराणां यथाशक्ति प्रदापयेत्
देवयज्ञस्य तत्काले मुहूर्तन्तत्परीक्षयेत्  १३४
सर्वतोद्य समायुतं नृत्तगेयसमायुतम्
ब्रह्मघोषसमायुक्तं नानाभक्तसमाकुलम्  १३५
पिञ्छछत्रपताकैश्च धूपदीपसमाकुलम्
वर्धनीं सहितां वा मङ्गळाङ्कुरशोभितम्  १३६
उद्धृत्य शयनाल्लिङ्गं सर्ववस्त्रं व्यपोह्य च
घृतं शिरोर्पणं कुर्याद्दूर्वाक्षत समायुतम्  १३७
अङ्कुरं पुष्पसम्युक्तं आचार्यैव जातकम्
भक्तैश्च परिचारैश्च दासीदास समायुतम्  १३८
पश्चाल्लिङ्गं समुद्धृत्य शिबिकां यानयेद्बुधः
रज्जु बन्धन्ततः कुर्यान्मुक्तालङ्कारसम्युतम्  १३९
एवमेव प्रकारेण कृत्वा धाम प्रदक्षिणम्
पृष्ठतो यजमानस्तु पुत्र भ्रातृसमन्वितः  १४०
अपरे त्वग्रतो गच्छेदव्यहस्तसमायुताः
विश्राम्य द्वारदेशे तु अर्घ्यन्दत्वा विशेषतः  १४१
तत्काले द्वारदेशे तु श्रमाञ्चैव निरीक्षयेत्
आचार्यो मूर्तिपैस्सार्धं लिङ्गस्थापनमारभेत्  १४२
सुमुहूर्ते तु संस्थाप्य लिङ्गं च द्वारसम्मुखम्

सुस्थितौ स्थापितं लिङ्गं धनधान्यसमृद्धिदम् १४३
सुखार्हं स्थापितं लिङ्गं वक्रस्थानं धनक्षयम्
तस्मात्सर्वप्रयत्नेन स्थाप्य लिङ्गं सुयत्नतः १४४
तदाधारशिला सर्वं आरंभं परिकल्पयेत्
त्रिफला शिवचूर्णं च कदळी गुडसम्युतम् १४५
स्नेहद्रव्याणि सर्वाणि स्थापयेच्छतवास्तुना
पश्चाद्धोमं समारभ्य ब्रह्मशिलां च कल्पयेत् १४६
सुस्निग्धं ब्रह्मशिलां योज्य स्थलं सुदृढमाचरेत्
पश्चाद्धोमं समाराध्य --- स्थापनं कुरु १४७
अष्ठबन्धन्ततो बद्ध्वा युग्मवद्दृढबन्धकम्
लाक्षसं जरसं सिक्तं कुरुविन्दं च गुग्गुलुम् १४८
गैरिकं गुळतैलं च अष्टबन्धनमुच्यते
तैलभागं बन्धनान्तं लाक्षान्तं क्रमशोन्यसेत् १४९
शुद्धिं कृत्वा यथान्यायं पवमानमुदीरयेत्
अथवान्य प्रकारेण अष्टबन्धनमुच्यते १५०
त्रिफलं शङ्खचूर्णं च कदळीगुळसम्युतम्
दधिघृतं पयश्चैव माषयूषमिति स्मृतम् १५१
चूर्णसिक्तयुतं वापि अपक्वमिति कीर्तितम्
पुण्याहं वाचयेत्तत्र शुद्धं कृत्वा तु भूतलम् १५२
दशाक्षरेण मन्त्रेण लिङ्गमूर्ध्नि न्यसेद्बुधः
पक्वाष्टबन्धने काले चन्दनेन तु लेपयेत् १५३
पञ्चगव्येन सम्प्रोक्ष्य लिङ्गपीठं विशेषतः
अष्टत्रिंशत्कलान्यासम्मकुटादि क्रमान्नयसेत् १५४
ईशानस्सर्वविद्यानामस्तु सदाशिवाय नमः इति
ईशानम्मूर्ध्नि विन्यस्य अङ्गुष्ठाग्रेण मुद्रया १५५
तत्पुरुषाय विद्महे तन्नो रुद्रः प्रचोदयात् इति

---------- मुखे तत्पुरुषन्यसेत् १५६
अघोरेभ्योऽथघोरेभ्यो -- रुद्ररूपेभ्यः इति
मध्यमाङ्गुळियोगेन अघोरं हृदिविन्यसेत् १५७
वामदेवाय नमो ज्येष्ठाय मनोन्मनाय नमः इति
अनामिकाङ्गुळियोगेन वामदेवेन गुह्यके १५८
सद्योजातं प्रपद्यामि भवोद्भवाय नमः इति
कनिष्ठिकाङ्गुळियोगेन पादादारभ्यमस्तकम् १५९
अकारं मूर्ध्नि विन्यस्य आकारन्तु ललाटके
इ ईं नेत्र द्वये चैव उ ऊ कर्णद्वये न्यसेत् १६०
ऋ ॠ च गण्डयोश्चैव ऌ ॡ नासाद्वये न्यसेत्
ए ऐ ओष्ठ द्वये चैव ओ औ च दन्त पङ्क्यो १६१
अं कारन्तालुमध्ये च आःकारन्तालुमूलके
दक्षिणादि क्रमेणैव क्रमेण परिपठ्यते १६२
अकारादिक्षकारान्तमक्षरं विन्यसेत्सुधीः
शिरोललाटनेत्रे च कर्णयोश्च द्विगण्डयोः १६३
आस्ये चोष्ठद्वये चैव दन्तपङ्क्तिद्वयोरपि
जिह्वायां तालु रन्ध्रे च स्वरान्षोडश विन्यसेत् १६४
कवर्गन्दक्षिणे हस्ते चवर्गं वामहस्तके
टवर्गन्दक्षिणे पादे तवर्गं वामपादके १६५
पफौ च दक्षिणे पार्श्वे बभौ च वामपार्श्वके
कण्ठे देशे मकारन्तु यकारं स्कन्धके न्यसेत् १६६
त्वग्रुधिरमांसमेदोऽस्थि मज्जाशुक्लासुवै
वकारादि सकारान्तं क्रमेणैव तु विन्यसेत् १६७
हकारं हृदि विन्यस्य ळकारं वृषणद्वये
क्षकारं मेढ्रदेशे तु विन्यसेत्तु विशेषतः १६८
कुन्देन्दुस्फटिका भासं जटामकुटधारिणम्

पञ्चवक्त्रान्वितं मूर्धन्नेत्र पञ्चदशैर्युतम् १६६
सर्वाभरणसम्युक्तं दशदोर्भिस्समन्वितम्
शूलं परशुखड्गं च वज्राभयं च दक्षिणे १७०
पाशन्नागाङ्कुशं चैव घण्टां वह्निं च वामके
सव्यं गोक्षीरसदृशं वामं रक्तनिभं भवेत् १७१
अघोरमञ्जनप्रख्यं पुरुषं कुङ्कुमप्रभम्
शुद्धस्फटिकसङ्काशं द्वात्रिंशल्लक्षणान्वितम् १७२
गोक्षीरधवळाकारं प्रणामामि सदाशिवम्
दिव्याम्बरधरन्देवं दिव्यपुष्पैरलङ्कृतम् १७३
दिव्यगन्धानुलिप्ताङ्गं शान्तरूपं स्मिताननम्
सर्वाभरणसम्युक्तं षोडशाब्दकयौवनम् १७४
पद्मोत्पलधरान्देवीं केशाळकविभूषिताम्
करण्डमकुटोपेतां रक्तवस्त्रोत्तरीयकाम् १७५
देवस्य वामभागे तु दिव्यरूपां मनोन्मनीं
एवं पठेन्नयसेद्देवीं द्विपादं पद्मनिष्ठकम् १७६
अथवान्य प्रकारेण चतुर्दोर्भिस्तु ध्याययेत्
पूर्वमभयवरदं परयोः पुष्पकं स्मृतम् १७७
एवं ध्यात्वा तु पीठस्थान्देवीं पादादिकेशकम्
उपानं पादुकं चैव जगतीजङ्घमेव च १७८
कुमुदं कुक्षिरित्याहु बाहुभ्यां फुल्लमेव च
कण्ठं कर्णमिति प्रोक्तं धरमाधारपट्टिका १७९
लिङ्गाच्चतुर्दशे भागे अंशं च प्रतिविन्यसेत्
त्रयांशं जङ्घमित्युक्तं त्र्यंशमूरुद्वयन्तथा १८०
त्र्यंशं शरीरमित्युक्तं गळमेकांशमीरितम्
द्व्यंशं शिखर सा ञ्चाप्यंशं मकुटके न्यसेत् १८१
एवं लक्षणमित्युक्तं सर्वलिङ्गं प्रकल्पयेत्

वर्धमानं स्थितं लिङ्गमासीनन्तु शिवाधिकम्  १८२
समखराडं च शयनं स्वस्तिकं लिङ्गपिङ्गकम्
इत्येवं लत्तरौर्युक्तं लिङ्गमध्ये तु ध्यानकम्  १८३
वृत्तपीठे स्थिता गौरी आसीना भद्रपीठके
शयनं पद्म पीठं स्यादन्येषु च चराचरम्  १८४
नन्द्यावर्तन्तु पीठेन ब्रह्मा हेमनिभं भवेत्
चतुर्मुखं चतुर्बाहुमत्तमाला कमराडलुम्  १८५
स्तम्भद्वयन्तु सम्बन्धम् लिङ्गोर्ध्वे तु प्रकल्पयेत्
ऊर्ध्वाय दत्तिणं वाम क्रमेण परिपठ्यते  १८६
कूर्मशिलेन संस्थाप्य भूमिदेवीं सलत्तधी
द्विभुजं श्वेतनिभामनन्तोपरि संस्थिताम्  १८७
एवं ध्यात्वा सुमना लिङ्गस्थापनमाचरेत्
गन्धपुष्पादिभिः पूज्य शिवाङ्गेन तु मन्त्रतः  १८८
दर्शयेत्पद्ममुद्रां च पीठे सर्वं विशेषतः
अग्निं प्रज्वाल्य तत्काले तत्काले होममाचरेत्  १८९
जयादिरभ्याधानं च राष्ट्रभृद्धोममाचरेत्
पूर्णाहुतिं च शिरसा स्विष्टमग्नेति मन्त्रतः  १९०
होमान्ते तु ततः पश्चात् आचार्यो मूर्तिपैस्सह
सर्वालङ्कारसंयुक्तं पिञ्छछत्र पताकया  १९१
धूपदीपसमायुक्तं ---------
शिवकुम्भन्ततोद्धृत्य मूलमेन्त्रेण देशिकः  १९२
अन्ये कुम्भवर्धनी च मूर्तिपाधारयेत्क्रमात्
कुम्भमुद्धृत्य शिरसा कुर्याद्ग्रामप्रदत्तिणम्  १९३
लिङ्गाग्रे स्थरिडलं कृत्वा शालितराडुलसम्युतम्
स्थरिडलोपरिविन्यस्य सदाशिवन्तु ध्यानयेत्  १९४
संस्थाप्य वामदेवेन अघोरेण निरोधनम्

पुरुषेण तु सान्निध्यं ईशानेन तु सम्मुखम् १९५
ध्यात्वा मनोन्मनी मन्त्रं पिण्डिकायां विशेषतः
सुलग्ने सुमुहूर्ते तु मन्त्रन्यासं समाचरेत् १९६
आचार्यस्सुप्रसन्नात्मा लिङ्गस्य दक्षिणे स्थितः
प्राणप्रकृतियोगन्तु ज्ञात्वा स्थापनमाचरेत् १९७
प्राणोमन्त्रमिति प्रोक्तः प्रतिर्जलमिति स्मृतम्
कुंभाद्बीजं समावाह्य क्रमेणावाहयेत्ततः १९८
दक्षिणेन तु हस्तेन स्थापनं बिन्दुमूर्धनि
ध्यानेनैव समायुक्तं सादाशिवम्मनुस्मरन् १९९
अङ्गमङ्गं प्रतिप्राज्ञै मरुमन्त्राम्भसम्युतम्
मूर्धादिपादपर्यन्तं अष्टत्रिंशत्कलान्नयसेत् २००
ध्यात्वासनं शिवं रूपं कुम्भोदकेन पूजयेत्
वर्धन्यां जलमायाभ्यां वामे पीठे प्रविन्यसेत् २०१
तज्जलैः पीटकं स्नाप्य मङ्गमङ्गन्नयसेद्बुधः
विद्येश्वरघटैश्चैव इन्द्राद्यैर्लिङ्गमर्चयेत् २०२
पञ्चावरणमार्गेण अर्चनोक्तं सुपूजयेत्
पञ्चवक्त्रे पञ्चवर्णं हविर्दत्वा विशेषतः २०३
अन्यानि सर्वमन्त्राणि अर्चनोक्तं समाचरेत्
आचार्य शिष्यभक्तानां परिचारांस्तु पूजयेत् २०४
इति योगजे क्रियापादे शिवलिङ्गस्थापनविधिर्नाम सप्तविंशतितमः पटलः

अथ वक्ष्ये विशेषेण शक्तिस्थापनमुत्तमम्
सर्वलोकहितार्थाय सर्वप्राणिहितावहम् १
स्थापनास्थापनं चैव सिद्धिस्थापनमेव च
स्वस्थापनं प्रतिष्ठा च प्रतिष्ठा पञ्चभेदका २

स्थापनं शैलजं प्रोक्तं आस्थापनं च धातुजम्
सौधं स्थापनसिद्धिश्च जीर्णोद्धारं सुसंस्थितम्  ३
प्रतिष्ठामन्त्र संयोज्यमेवं पञ्चविधोच्यते
शैलजं लोहजं वापि सौधजं रत्नजं तथा  ४
शिलायान्तु शिलायां वा गृहमूर्तौ विचक्षणः
शिलापरिषदां चैव सर्वं वैस्तु शिलाबुधः  ५
आचार्यश्शिल्पिभिः कृत्वा शोध्य ज्योतिषकस्तथा
दिनवारमुहूर्तं च कुर्यात् शिल्पिभिस्सह  ६
शङ्खनादसमायुक्तं पूर्णकुम्भैश्च शोभितम्
रुद्रस्त्रीनवमांसं च मधुक्षीरसुदर्शनम्  ७
विप्रद्वयसमायुक्तं गौळिदक्षिणसम्युतम्
ऋषिदक्षिणपार्श्वेन मध्याह्ने तु प्रकाशयेत्  ८
प्रातः काले तु वामेन पक्षिजाति जनार्दन
शङ्खदुन्दुभिनिर्घोषैर्मुहूर्तन्तु विचक्षणः  ९
पर्वताग्रे समायुक्तं होमं कुर्याद्विचक्षणः
दिग्विदिक्षु ।  शिलापरीक्षणञ्चैव
बलिं चैवाचर्यो शिल्पिभिस्सह  १०
आचार्यं पूर्ववत्कृत्वा पश्चात् शिल्पिस्तु ताडयेत्
लोहजेथ मधूच्छिष्टम् सङ्ग्रहेत्तु विचक्षणः  ११
सौधजे दारुजं ग्राह्य रत्नजंन्तु ग्रहेद्बुधः
षोडशांशमथैकैकन्तत्तद्भागस्य चोपरि  १२
गुणभूताब्धि रुद्रांशं रुद्रांशप्रतिमोदयम्
तथैव मानहीनं वा तन्मानं वा गृहेत्पुनः  १३
त्रयत्रिंशत्प्रमाणेन ग्रहेन्मानमथोच्छ्रयम्
उदयञ्चतुरशीति द्विषष्ठी च तथैव च  १४
चतुर्विंशत्षोडशांशं भज्येकांशेन योजयेत्

एवमाद्योदयं कुर्यात्तेन मानाङ्गुलेन तु १५
त्यजेदलीनं विप्रेण गुणयेत्तु विचक्षणः
गुणेन गुणितं यत्र द्रस्वैवे च सुहिक्रमात् १६
शिष्टं योनिरिति ख्यातं वसुभिर्गुणितं पुनः
भू स्वै द्वे सप्तविंशेन गेषमश्वादितो भवेत् १७
रन्ध्रेन गुणितं तुन्नश्च धात्वंशेनैव हारिते
शेषकर्मादि वारस्यात्तेनैव वसुभिर्गुणैः १८
अर्कांशेन हारित्वा देवं शेषांशमेव तु
नवेन गुणितं यत्र तद्दशांश क्रमाद्बुधः १९
शेषं व्ययमिति ख्यातमवेनैव गुणैस्ततः
नन्दांशेन यत्कार्यं शेषांशमंशकं विदुः २०
आयाधिक्यं धनाधिक्यं व्ययाधिक्यं धनक्षयम्
यो निष्कं ध्वजसिंहाख्यो ध्वजो वृक्षेन्द्रगोधकः २१
निधनं शेषमाख्यातं वर्जयेत्तु विचक्षणः
वारेषु सितसोमगुरवश्च शुभावहाः २२
अशुभा तथान्यानि वर्जनीया प्रयत्नतः
अशेषतश्शै शेन उक्तिश्शक्तिस्तथैव च २३
वित्तानीच नृपतीह्या समृद्धिश्च शुभावहम्
शेषाश्च शुभमाख्याता एतेषां शुभकं वरम् २४
नृपश्च यजमानश्च देशिकश्च तथैव च
ग्रामक्षा श नकुलं सङ्ग्रहेत्तु विचक्षणः २५
नृपरित्र विनावाथ दिव्यक्षान्तमथापि वा
जन्मसम्पत्विपत्क्षेम प्रत्यरस्साधको वधः २६
मैत्रं परममैत्रं च जन्मादीनि पुनः पुनः
विपत्प्रत्यरनैधन्यन्तथा चन्द्राष्टमं भवेत् २७
वैनाशिकं तथा चैव वर्जनीयं प्रयत्नतः

अर्धोत्तरन्तु सङ्ग्राह्यमशुभं वर्जितम्मतम् २८
एवं संवीक्ष्य बिंबादीन्कल्पयेत्कल्पवित्तमः
मूललिङ्गानुरूपेण प्रोच्यते सकलंत्विह २९
मानुषलिङ्गमानेन कृत्वा बेरन्तु मानवम्
दैविकस्य तु मानेन कृत्वा चैवाष्टकं भवेत् ३०
अव्यक्तनादरूपं हि सर्वेषां शक्तिमारभेत्
धात्री सरस्वती देवी महालक्ष्मी तथैव च ३१
महामोटी च दुर्गा च सप्तमातृगणास्तथा
सर्वशक्तिसमुद्भूत बिन्दुरूपेण चोच्यते ३२
एवं लक्षणमाख्यातं शक्तिरूपं विधीयते
चतुर्भुजां त्रिणेत्रां च करण्डमकुटान्विताम् ३३
पद्मनीलोत्पलं हस्तमभयं वरदान्विताम्
सुस्थितं पादसंयुक्तं चरणाम्बुजमेव च ३४
एवन्देवी समाख्यातं षट् भुजं च ततः श्रुणु
अभयं वरदं पूर्वं परहस्तसमन्वितम् ३५
द्विपद्मं टङ्कशूलं च कारयेत्तु विशेषतः
पर्याय वाचकाह्येते कामकोष्ठमिति स्मृतम् ३६
गौरी रूपमिदं प्रोक्तं स्थापनीय विधिं श्रुणु
अष्टदिक्ष्वन्तराळेषु हर्म्याग्रे तु विशेषतः ३७
कामकोष्ठालयं प्रोक्तं स्थापयेत्तु विशेषतः
वामे वा दक्षिणे वापि स्थापनीया मनोन्मनी ३८
अष्टाष्टस्तम्भसम्युक्तं कलास्तम्भयुतन्तु वा
द्वादश स्तम्भसम्युक्तम्मण्टपन्तु त्रिधा भवेत् ३९
मध्ये नन्दपदं वेदीं कल्पयेत्कल्पवित्तमः
रत्नन्यासन्तथापूर्वे द्वितीयन्नेत्रमोचनम् ४०
तृतीयं बेरशुद्धिः स्यात् चतुर्थं ग्रामप्रदक्षिणम्

पञ्चमन्तु जले वासं षष्ठं पराटप वेशनम् ४१
सप्तमं शयने स्थाप्यं होमकर्म तथाष्टमम्
नवमञ्चार्घ्यविन्यासन्दशमं स्थापनं परम् ४२
प्रासादस्य पुरोवापि प्रतिष्ठामराटपं कुरु
ऐशे वा पावके वाथ ऐन्द्रे वा सौम्य एव च ४३
यमे वा राक्षसे वायौ वरुणे वापि कारयेत्
प्रतिष्ठामराटपं कुर्यात्कारयेत्तु विशेषतः ४४
पञ्चविंशतिहस्तैर्वा दशपञ्च करेण वा
द्वादशन्दशहस्तैर्वा चाष्टौ हस्तैरथापि वा ४५
द्वादशाङ्गुलमुत्सेधन्तालन्तत्रैव कारयेत्
द्वितालं वेदिकोत्सेधन्दर्पणोदरसन्निभम् ४६
द्विहस्तं वेदिविस्तारं त्रिहस्तन्तु चतुष्करम्
उपवेदि समायुक्तं कुराडानि परितः क्रमात् ४७
योनिकुराडं चतुर्दिक्षु विदिक्षु पद्मकुराडकम्
इन्द्रईशानयोर्मध्ये वृत्तकुराडं प्रधानकम् ४८
नवाग्निं कल्पयेद्धीमानेकपञ्चाग्निकारयेत्
शास्त्रप्रोक्तप्रमाणेन पश्चाच्छिल्पिं विसर्जयेत् ४९
गोमयेनोपलिप्याथ मराटपं कुराडवेदिका
मराटपस्योत्तरे भागे स्नानमराटपवेदिका ५०
ब्राह्मणान्भोजयेत्तत्र पुनर्गोमय वारिणा
जलेनार्द्री कृतेनैव लेपयेत्सर्वमेव च ५१
पुनः पुरायाहमारच्य वास्तु होमं समाचरेत्
राक्षसे वास्तु देवानां होमं कृत्वा विशेषतः ५२
स्थापनस्य दिनात्पूर्वे अङ्कुरारायर्पयेद्बुधः
सप्तपञ्चत्रिरात्रं वा एकरात्रमथापि वा ५३
सद्योङ्कुरन्तथा चैव सद्योऽधिवासनं कुरु

निर्दिष्टदिवसात्पूर्वे पञ्चाहे वा त्र्यहेऽपि वा ५४
एकाहे वा तथा चैव रत्नन्यासं समाचरेत्
मराटपे मध्यदेशे तु शिवाग्रे वा विशेषतः ५५
गोमयालेपनं कृत्वा स्थरिडलं विधिना कुरु
पीठं मध्ये तु विन्यस्य प्रोन्नयेत्कुशवारिभिः ५६
पूजयेत्तत्र मध्ये तु ततो नन्तासनन्तथा
रत्नानि विन्यसेत्तत्र मध्यादीशान्तकं क्रमात् ५७
माणिक्यम्मध्यमे कुर्यादिन्द्रनीलन्तथैव च
वैडूर्यं वह्निदिक्भागे तथावैर गोचरे ५८
नीलं वै याम्यदिक्भागे गोमेदन्निर्ऋृतौ तथा
स्फटिकं वारुणे भागे पुष्यरागञ्च वायवे ५९
वज्रं तत्सौम्यदिक्भागे प्रवाळं शाङ्करे दिशि
नवबीजेन विन्यासो स्थिरस्थैवकस्योपरि ६०
स्थापयेत्प्रतिमान्तस्यां सुस्निग्धं सुदृढं तथा
शिल्पिना तीन्नरो नैव नेत्रोन्मीलनमेव च ६१
अर्चयुक्तदिनात्पूर्वं परचक्रक्रमाद्विदुः
त्रीणिपञ्चयुक्तायाम् दग्धं करणनेत्रकम् ६२
तस्म--- फणयेत्तत्र नेत्रयुग्मदिने कृते
स्थरिडलं शालिभिः कुर्यात् घटानादौ तु विन्यसेत् ६३
तन्मध्ये बेरमादाय स्थापयेद्धृदयेन तु
शिल्पिना दन्निणे हस्ते बिम्बमस्त्रेण शोधयेत् ६४
हेमसूचिप्रहारेण लेपयेद्दृष्टिमराडले
कृष्णमराडलमध्ये तु ज्योतिर्मराडलमध्यमे ६५
वर्तयेत्तत्क्रमेणैव रजतं सप्तमक्रमात्
भ्रूरेखां पद्मरेखां च तद्बहिः क्रमशः कुरु ६६
शिल्पिनन्तु विसृज्याथ पुरायाहं कारयेद्बुधः

बेरशुद्धिं ततः कुर्यात्पञ्चगव्यस्य सेचनात् ६७
मधुघृतं पयश्चैव प्रतिप्रस्थन्तु पात्रके
सौवर्णपङ्कजञ्चैव पूर्वाग्रयासूत्र पात्रके ६८
स्थरिडलं पूर्ववत्पूर्वे बेरन्तस्योपरिन्यसेत्
घृतं मिमिक्षेति घृतं स्राप्यायस्वेति क्षीरकम् ६९
पूजयेद्गन्धपुष्पाद्यैः प्रणवेन तु बुद्धिमान्
नखत्रयन्तु स्वर्णेन दक्षहस्तकराग्रहे ७०
नेयजेन्नेत्रमन्त्रेण नयनोन्मीलनं कुरु
जाग्रस्वप्नसुषुप्तिश्च तुर्यतुर्यादिपञ्चकम् ७१
तस्माज्जाग्रेति पञ्चैते वर्ततेतिव्यजाग्रतम्
तत्काले चाक्षिमोक्षं च कारयेद्देशिकोत्तमः ७२
पञ्चगव्याभिषेकन्तु श्रीपत्रं कुशवाससा
घर्षयेद्बिल्वपत्रेण चन्दनेनानुलेपयेत् ७३
दर्शयेद्धेनुमुद्रां च नेत्रमन्त्रमनुस्मरन्
सूर्यचन्द्राग्निमन्त्रैस्तु प्रतिमरडलमर्चयेत् ७४
स्वर्णपुष्पक्रमेणैव घृतन्तत्रैव विन्यसेत्
वर्मपङ्कजमात्रेण पुष्पावतीति मन्त्रतः ७५
गोर्धेनुहव्यमन्त्रेण सवत्सां गां प्रदर्शयेत्
ब्रह्मजज्ञानमन्त्रेण कन्यकां संप्रदर्शयेत् ७६
प्रच्छन्नपटमाच्छाद्य द्रव्याद्यादीनिभिस्सुरैः
इक्षुखरडसमायुक्तन्दधिक्षीरसमन्वितम् ७७
धान्यं च व्रीहिसंयुक्तम्मुद्गमाषकुळुत्थकम्
सर्वालङ्कारसंयुक्तं ग्रामं व्रतं चरेत्पुनः ७८
जलतीरे तु संस्थाप्य जलेनैवाभिषेचयेत्
प्राक्छिरश्चोर्ध्ववक्त्रं स्याल्लोकपालघटान्वितम् ७९
वामादिशक्तयश्चाष्टौ विद्येशाविन्यसेद्बुधः

अहोरात्रं त्रियामं वा द्वियामं वाधिवासयेत् ८०
रान्त्यन्तके रजन्यां वा बिम्बं च रथसंस्थितम्
शिबिकां वा समारोप्य देशिकः पुत्रसम्युतः ८१
स्नानमण्टपमावेश्य वेदिकायामथोपरि
वस्त्रकूर्चसवस्त्रं च स्नानं पूर्वोक्तवद्बुधः ८२
पञ्चमृत्पञ्चगव्यैश्च बिल्वपत्रैश्च घर्षयेत्
सुगन्धामलकादीनि लेपयेत्तु पुनः पुनः ८३
कुम्भानामभिषेकान्ते मण्टपाराधनं चरेत्
पूर्वोक्तेन विधानेन मण्टपं पूजयेत्क्रमात् ८४
दर्भमाला समायुक्तं मुक्तादाम प्रलम्बितम्
चतुर्द्वारसमायुक्तञ्चतुस्तोरणसम्युतम् ८५
अष्टमङ्गळमादाय वेदिकोपरि विन्यसेत्
स्थण्डिलं पूर्ववत्कुर्यादष्टद्रोणैश्च शालिभिः ८६
तदर्धतण्डुलैर्भूष्य तदर्धं च तिलैरपि
दारुजं रोमजं चैव पक्षिजं चर्मजन्तथा ८७
उपर्यास्तरणञ्चैव पञ्चधा शयनं भवेत्
दारुजं फलकं चैव दुकूलं केवलन्तथा ८८
अलाभे चैव कार्पास वस्त्रेणाच्छाद्यमेव च
दार्व्यां फलकायां वा कल्पयेच्छयनन्तथा ८९
पूजयेच्छयने मध्ये वामादीनामनुक्रमात्
देवीं च देवमारोप्य शाययेच्छयनोपरि ९०
प्राक्शिरश्चोर्ध्ववक्त्रं च प्रणवेन तु मन्त्रतः
सद्योधिवासनन्तत्र प्रतिमा यानकन्तथा ९१
लम्बकूर्चं सवस्त्रं च पूजाद्रव्यैश्च सम्युतम्
पूजयेद्गन्धपुष्पाद्यैराचार्यं पुत्रकैस्सह ९२
पुण्याहं पूर्ववत्कुर्यात् वस्त्रेणलक्षणं कुरु

गन्धादिनार्चयेत्सर्वं तत्र देवीं स्वनामतः ९३
पञ्चभिर्ब्रह्ममन्त्रैस्तु विन्ह्यसेत्प्रतिमोपरि
सुरभिन्दर्शयेद्विद्वानुत्तराभिमुखस्थितः ९४
प्राणायामत्रयं कृत्वा प्रापकी चतुरो भवेत्
अन्तर्ध्यानेन वेदीश मुद्भिस्तं प्रतिमारभेत् ९५
पुष्पैरञ्जलिमापूर्य तत्तन्मूलमतः परम्
प्रणवादि नमोन्तं च योजयेत्तदनुक्रमात् ९६
आवाह्य मूलमन्त्रेण प्रधाने तु घटेन्यसेत्
स्थापनञ्चैव सान्निध्यं सन्निरोधन्तथैव च ९७
नमस्कारं मुद्रया ध्यात्वा दर्शयेत्तु विशेषतः
पाद्यादीन्दापयेत्तत्र मूलम्मूले तु विन्यसेत् ९८
अङ्गैरङ्गानि विन्यस्य पूजयेत्तु यथाविधि
वामादि शक्तयश्चाष्टौ विन्यसेत्तु विचक्षणः ९९
ततो मन्त्रन्नयसेच्चैव गन्धाद्यैरर्चयेत्क्रमात्
वज्रमुद्रान्तथा बद्ध्वा नमस्कारं विशेषतः १००
ततो होमं प्रकुर्वीत तस्य तत्क्रममुच्यते
कुण्डानि रोधयेत्तत्र संस्कारन्तदनन्तरे १०१
अधि प्रत्यधिदेवैश्च पूर्वादीनि प्रदक्षिणम्
प्रधाने तु तथा देवीं वामादीनष्टकुण्डके १०२
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
समिदाज्यान्नलाजैश्च सर्षपांश्च यवान्तिलान् १०३
अश्वत्थोदुम्बरप्लक्षं वटं पूर्वादिषु क्रमात्
अपामार्गमर्कजं च खादिरं पावकादिषु १०४
पलाशञ्चादि कुण्डेषु प्रधानेषु तथैव हि
तमुत्पर्याय सर्वेषु अलाभे तु पलाशकम् १०५
समिदाहुतिं च मूलेन आज्यं वक्त्रेण हूयते

चरुं वै घोरमन्त्रेण लाजं वामेन हूयते   १०६
सर्षपं सद्यमन्त्रेण हृदयेन यवाहुतिम्
शिरसा च तिलं हुत्वा प्रत्येकन्तु शताष्टकम्  १०७
एवं क्रमेण सर्वत्र कुण्डे होमं समाचरेत्
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शयेद्वैरवर्धनीम्  १०८
तथैव होतृभिस्सार्धं तत्तद्भागेषु संस्पृशेत्
सर्वद्रव्याहुतिं चैव तत्तत्कुण्डेषु मूर्तिपाः  १०९
तत्तन्मन्त्रेण जुहुयात्कुण्डे चैव विचक्षणः
मधुक्षीरशतं हुत्वा शर्करादीन्शतं हुनेत्  ११०
चतुर्दिक्षु च शालायाः कुर्यादध्ययनं बुधः
ऋग्यजुस्सामवेदां च अथर्वाध्ययनं कुरु  १११
उमासूक्तं जपेच्चैव श्रीसूक्तं चैव वेदिकैः
नैवेद्यं च विशेषेण ताम्बूलन्तु निवेदयेत्  ११२
अधिवासनमेवोक्तं रात्रिशेषं व्यपोह्य च
सद्योधिवासनं चैव दिवाकाले विशेषतः  ११३
प्रभाते विमले तत्र देशिकः पुत्रकैस्सह
स्नानं कृत्वा विशेषेण नित्यकर्मसमाचरेत्  ११४
शुक्लवस्त्रोत्तरीयश्च पञ्चाङ्गभूषणैर्युतः
सुमुहूर्ते सुलग्ने च देवीमभ्यर्च्य यत्नतः  ११५
अग्निप्रज्वलनं कृत्वा परिषेचनमाचरेत्
सर्वद्रव्याहुतिं हुत्वा ----------- ११६
मूर्तिपास्साधयेत्पश्चात् परिधीं परिस्तरान्
विष्टरांश्चैव सर्वेषां गृहीभ्यश्चरतः क्रमात्  ११७
निक्षिपेदग्निमध्ये तु तथोत्थाय तु देशिकः
नववस्त्रैरलङ्कृत्य उष्णीषैश्चोत्तरीयकैः  ११८
सपवित्रकरास्सर्वे शुक्लमाल्यैरलङ्कृताः

बिम्बमुत्थापयेद्विद्वान् हृदयेन विचक्षणः ११९
सवस्त्रकूर्चान्सर्वां च वर्जयेत्तु विशेषतः
स्तोत्राध्ययनपूर्वैश्च गानगेयादिवाद्यकैः १२०
स्नानमण्टपमध्ये तु पीठे बिम्बन्निवेदयेत्
पूजयेद्गन्धपुष्पाद्यै शुद्धिं कृत्वा तु देशिकः १२१
पञ्चमृत्पञ्चगव्यैश्च ध्यात्वादेवीं त्र्यम्बकम्
गौरीमिमाय मन्त्रेण मायामन्त्राणि पूजयेत् १२२
गन्धोदकेन संस्नाप्य हरिद्रालेपनैस्सह
देवीं पीठे दृढं स्थाप्य अभिषेकं समाचरेत् १२३
शिल्पिं विसर्जयेत्तत्र पञ्चगव्याभिषेचनम्
पुनः पुण्याहमारच्य वर्धनीमभिषेचयेत् १२४
शुद्धोदकैश्च बेरं च अभिषेकं च कारयेत्
ब्रह्ममात्मन्यसेच्चैव पुनराचमनञ्चरेत् १२५
अर्घ्यन्दत्वा विशेषेण पुष्पमूर्धनि दापयेत्
निद्राकुम्भन्ततोद्धृत्य देशिको मूर्तिपैस्सह १२६
बिम्बाग्रे स्थण्डिलं कृत्वा स्थापयेत्पूर्ववत्क्रमात्
गन्धपुष्पादिभिः पूज्य सुमुहूर्तन्निरीक्षयेत् १२७
पञ्चब्रह्माङ्गमन्त्रैस्तु विद्यमूर्तिन्नयसेत्पुनः
अर्चयित्वा तु वर्धन्यामुद्धृत्य मृदहस्तकम् १२८
ध्यायेद्बिन्दुमात्रान्तं हृदि मध्ये समाहितः
प्राणवृत्ति निरोधेन कुम्भकं कारयेद्बुधः १२९
घटे घटे स्थितं मन्त्रं जयं प्राणस्तु निर्मितम्
तस्मात्तु मूलमुच्चार्य हृत्सरोजात उच्यते १३०
उत्तरे वर्धनी तोयं तन्मन्त्रेण तु देशिकः
कौतुकं बन्धयेद्देव्या वाम हस्ते तु यत्नतः १३१
गौरीमिमाय मन्त्रेण होमकर्मादिकं चरेत्

मूलमन्त्रेण सम्पूज्य होमं पूर्ववदाचरेत् १३२
मुकुळीं पद्ममुद्रां च बीजमुद्रां प्रदर्शयेत्
दिशास्वध्ययनं चैव पूर्वोक्तविधिना कुरु १३३
गौरी कलास्त्वहं वक्ष्ये गौरीबीजसमुद्भवाम्
तारा ईशकला ज्ञेया विद्यावक्त्रकलास्मृता १३४
मृत्युश्श्रद्धा जरा मेधा स्वधा स्वस्तिश्च वर्मिणी
पालिनी ज्वालिनी चैव स्मृतिः कामा मतिः प्रजा १३५
शान्तिर्भूतिः क्रियाक्षान्तिर्घोरा वामकलान्न्यसेत्
शांतिर्दान्तिर्दया स्वस्ति द्युतिस्सन्ध्या तु सद्यजा १३६
षड्विंशति कलाह्येता गौरी देहे तु विन्यसेत्
ताराञ्च विन्यसेन्मूर्ध्नि विद्यां वक्त्रे प्रविन्यसेत् १३७
हृदये च गळे बाह्वोर्जठरे नाभिदेशके
अघोरस्य कलाह्येता योनिगुह्यप्रदेशके १३८
ऊर्वोर्जानुद्वये चैव पृष्ठे द्वये पार्श्वके
वामदेव कलाह्येता देवी देहे तु विन्यसेत् १३९
पादयोरुभयोश्चैव हस्तयोरुभयोरपि
सद्योजात कलाह्येता देवीदेहे तु विन्यसेत् १४०
उद्धृत्य शिरसा मन्त्री वस्त्रकूर्चं हृदिस्थितम्
प्रतिमा हृदयेन्यस्य ततः कुम्भाभिषेचनम् १४१
सहस्राक्षरीमहामन्त्रमुच्चरन्नभिषेचयेत्
संवत्सराक्षरं वापि दक्षिणेन ----------- १४२
वामादीनां च कुम्भानां विन्यसेदासनोपरि
तत्तत्कुम्भस्थतोयैश्च पीठे स्यादभिषेचनम् १४३
दळमूले न्यसेच्चैव अङ्गेष्वङ्गानि च क्रमात्
-------- प्रणवं मूर्ध्नि विन्यसेत् १४४
गौरी गायत्रि मन्त्रेण मातृकां विन्यसेत्क्रमात्

गन्धादिभिश्च सम्पूज्य विशेषार्घ्यन्ततः पुमान् १४५
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च धूपकम्
वस्त्राभरणमालां च धूपदीपन्ददेत्पुनः १४६
हविर्दत्वाथ देवीनां वामादीनां च दापयेत्
एवमादीनि सर्वाणि हृदयेन प्रदापयेत् १४७
एवं वै शैलजे बिम्बे लोहजे वापि कारयेत्
शैलजप्रतिमां हित्वा लोहजं च चलाचलम् १४८
लोहजे वा समासेन ततो ग्राम प्रदक्षिणम्
तत्रादौ कौतुकञ्चैव उत्सवं पुनराचरेत् १४९
अचलन्तु तथा चैव तोयाधिवासनं विना
शयने शयनोक्तेन शेषं सर्वं समाचरेत् १५०
रत्नादीन्निन्यसेच्चैव मूलमूले विचक्षणः
शैलजानां च मूलेन विन्यसेन्नवरत्नकम् १५१
चित्राभासा तु वैचित्रे तथोक्तान्नतु विन्यसेत्
तोयाधिवासनन्तत्र तथा च शयनं विना १५२
एवमेव विधिं ज्ञात्वा प्रतिष्ठां कारयेद्बुधः
सौधजं भित्ति चित्रेण पादाग्रे हस्तमात्रकम् १५३
पीठं वापि प्रपां वापि बेरं वापि प्रकल्पयेत्
कर्मार्चारूपमेवोक्तं तत्रैवं सर्वमाचरेत् १५४
कामकोष्ठप्रतिष्ठा च सकळस्थापनं श्रुणु
इति योगजे क्रियापादे शक्तिप्रतिष्ठाविधिर्नाम अष्टाविंशतितमः पटलः

कृत्तिकादीपपटलः
दीपयन्त्र विधानेन महादीपं प्रकल्पयेत्
तदन्ते चो ---- च्छालितण्डुलसम्युतम् १

------------------- त्रके
उमास्कन्दादिदेवानामेक --- समर्चयेत् २
ग्रामप्रदक्षिणं कृत्वा बलिपूर्वादिविन्यसेत्
बलिपीठार्चवसानान्ते दिग्देवबलिन्दापयेत् ३
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुळिय --
----- लि टुर्पं वा निवेदयेत्तु विशेषतः ४
--- भूत हविषन्दत्वा --- समन्वितम्
ताम्बूलन्दापयेत्तत्र सर्वोपचारसम्युतम् ५
इति योगजे प्रतिष्ठातन्त्रे कृत्तिकादीपविधिपटलः

कल्याणसुन्दरेशस्य प्रतिष्ठा वक्ष्यतेऽधुना
पूर्वोक्तविधिना तत्र अङ्कुरार्पणमाचरेत् १
वेदिकस्थण्डिलं कृत्वा स्थापनन्तु पृथक्पृथक्
पूर्वोक्तलक्षणैर्युक्तां यागशालां च कारयेत् २
पृथग्वेदिहोमकुण्डन्तु कारयेत्तु विशेषतः
देवी देवं च कुम्भं च विद्येशं शक्तिकं न्यसेत् ३
अन्येषां ब्रह्मदीनां इन्द्रादिमूर्तिकान्नयसेत्
प्रतिष्ठान्ते विशेषेण कल्याणं कारयेद्बुधः ४
दक्षिणे ब्रह्मसंस्थाप्य उत्तरे विष्णुमर्चयेत्
गौरीं च दक्षिणे स्थाप्य लक्ष्मीं पार्श्वे तु विन्यसेत् ५
ब्रह्मजज्ञानमन्त्रेण ब्रह्माणं च प्रतिष्ठयेत्
इदं विष्णिवति मन्त्रेण विष्णुस्थापनमाचरेत् ६
गौरीमिमाय मन्त्रेण गौरीन्तु पूजयेत्ततः
श्रीदेवीमूलमन्त्रेण श्रियं स्थाप्य विशेषतः ७
आवोराजेति मन्त्रेण पश्चाद्देवं समाचरेत्
यथाक्रमेण देवानां मूलेनैव तु होमयेत् ८

विष्णुभूतासशक्ति देवीञ्चैव तु पूजयेत्
कल्याणं कारयेत्तत्र बोधायनीय सूत्रकैः ९
ताम्बूलन्दापयेत्तत्र मुखवाससमन्वितम्
सर्वालङ्कारसंयुक्तं कल्याणं कारयेत्सुधीः १०
प्रतिष्ठा कर्मतत्सर्वं पूर्वोक्तविधिना शुभा
चन्द्रशेखरमूर्त्यादि गुहोमा सहितस्य च ११
किं चिदत्र विशेषोऽस्ति कल्याणन्तत्र मूर्तीनाम्
कालानिग्रहकामार्यो रोङ्कारं पश्चिमे न्यसेत् १२
कामनिग्रहकालार्योश्शक्तिं च वर्जयेत्स्वयम्
लिङ्गोद्भवस्य पार्श्वे तु अजविष्णु समायुतम् १३
अधश्चोर्ध्वगतीः कार्यौ सूकरा हंसकाकृती
पाशुपतप्रतिष्ठां च -------- १४
पूर्वोक्त विधिना तत्र होमस्थापनमाचरेत्
सर्वेषामधिदेवानां गौरी स्थापनवर्जकम् १५
षोडश प्रतिमान्सर्वानुमास्कन्दोक्तवन्नयेत्
इति योगजे क्रियापादे कल्याणसुन्दरप्रतिष्ठाविधिर्नाम त्रिंशत्तमः पटलः

अथातस्संप्रवक्ष्यामि शूललक्षणमुत्तमम्
स्थापनान्तमहं वक्ष्ये सर्वलोकहिताय च १
सर्वदेवमयं शूलं हेमरजततांम्रकैः
आयसेन तथा कुर्यादलाभे तु विधीयते २
गर्भद्वादशहस्तेन तालेनैव तु कल्पयेत्
गर्भसम्मुत्तमं शूलं पादहीनन्तु मध्यमम् ३
अधमं मध्यमं ज्ञेयं तूर्णभागेन वक्ष्यते
गर्भद्वारचतुर्भागन्त्रिपादमुदयन्तु वा ४

गर्भन्तु भूमसत्वङ्गं द्वयोरन्तरमष्टधा
उत्तमादि विभागेन मानन्त्रयमिति स्मृतम् ५
उत्तमादि त्रयञ्चैव मध्यमादि त्रयं स्मृतम्
अधमादि त्रयं चैव यथाक्रममिति स्मृतम् ६
द्वारोत्सेध समं श्रेष्ठं रन्ध्रभागविहीनकम्
मध्यमं शूलमाख्यातं अधमं शूलमुच्यते ७
पञ्चभागविहीनं स्यादधमं शूलमुच्यते
रत्निस्वरीयकं श्रेष्ठं त्रिरत्निमध्यमं शुभम् ८
--- विरत्निश्चाधमं विद्यात् हस्तमानमिति स्मृतम्
लघुमाने त्रिंशदंशादि समभागेन भाजयेत् ९
भागमेकं समायोज्य यावत्तसु भोदयम्
यौगिकं लौकिकं चैव द्विविधं शूलमुच्यते १०
नृपवास्तु यजमानानां अनुकूलं च लौकिकम्
यौगिकं मानमात्रेषु कुर्याद्यौगिकमुच्यते ११
आयाममूलभागेकं पात्राणां याममुच्यते
नाटिकांशं भवेत्तत्र एकांशं पत्रविस्तरम् १२
सङ्गृह्य पत्रमानन्तु चतुरश्रं समं कुरु
पत्रद्वारं विसृज्याथ पार्श्वयोरुभयोरपि १३
वृत्ताकारं यथा तत्र वर्तते वर्तितं क्रमात्
तयोर्बाह्यान्तरं ग्राह्य भ्रामयेदिन्दु खण्डवत् १४
पार्श्वपात्रं द्वयं ह्येवं भज्यतद्वर्तुळन्नयेत्
पात्राद्यारेण चाद्वेतु धायायान्विति सम्युतम् १५
तदर्धं मुकुळी कुर्यान्मध्यमूलाग्रतं क्रमात्
पात्रविस्तारकस्याष्ट भागेकासनमुच्यते १६
ताराग्रेनाग्रके मूले चान्तरं पार्श्वपत्रयोः
पादायामाय मानं च नवधामूलभागकम् १७

पादायाममिति प्रोक्तं तदर्धं पादविस्तरम्
द्विगुणं मध्यपार्श्वे तु द्विगुणं पादविस्तरम्  १८
द्विगुणं मध्यविस्तारं पादविस्तारपार्श्वके
पात्राणां पादमूले तु कुर्याद्वै कुण्डलीकृतम्  १९
विचित्रपत्रवल्लीभिः पत्रमूलानि कारयेत्
तस्याधः पालिकां कुर्यात्पात्रायां मध्यभागतः  २०
तत्तारन्नवधाभज्य व्योमांशं पालिकायतः
द्व्यंशेनाब्जं च तस्याधः कोणेष्वश्वत्थ पत्रवत्  २१
उत्तरायणकाले तु शुक्लपक्षेशुभे दिने
प्रतिष्ठादिनपूर्वे तु अङ्कुरारार्पयेत्सुधीः  २२
नेत्राणां मोक्षणञ्चान्ते कुर्याद्द्रव्याभिषेचनम्
सर्वातोद्यसमायुक्तं सर्वालङ्कारभूषितम्  २३
त्रिशूलं समलङ्कृत्य कुर्याद्ग्रामप्रदक्षिणम्
जले चैव प्रपां कुर्याच्चतुर्गात्रसमन्वितम्  २४
वितानदर्भमालादि ध्वजैश्चैव समायुतम्
नववस्त्रेण सम्वेष्ट्य -------- २५
कण्ठदघ्न जले चैव प्राक्छिरश्चोर्ध्ववक्त्रकम्
शांययित्वा त्रिशूलं च सद्येन फलकोपरि  २६
त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा
प्रासादस्याग्रतः कुर्यात्पूर्ववन्मण्टपन्तथा  २७
मण्टपन्तु त्रिधाकृत्वा वेदीं मध्ये तु कल्पयेत्
रत्निमात्रसमुत्सेधन्दर्पणोदरसन्निभम्  २८
कुण्डानि परितः कुर्याद्दिशासु विदिशासु च
दिशासु चतुरश्राणि कोणेष्वब्जानि कल्पयेत्  २९
ईशानशक्रयोर्मध्ये वृत्तकुण्डं प्रधानकम्
पालिकां --- चैव तदर्धं कल्पयेद्द्ळम्  ३०

पालिकायास्तु विस्तारं विभजेच्च दशांशकम्
एकांशं गळविस्तारं उत्सेधं तत्समं भवेत्  ३१
पद्मकार्यं घटाकारं मूलार्धं स्यात्तदर्धकम्
तस्याधः खण्डधारेण कर्णं कुर्यात्तु बुद्धिमान्  ३२
पादेन कुम्भतोरेण तस्याधस्ताटिका भवेत्
घटवत्ताडिकामानं युग्मभागविभाजितम्  ३३
एकभागकहरिका ----- पुष्पकम्
ताडिकायास्तु विस्तारं चतुर्भागन्त्रिभागिकम्  ३४
तरुदण्ड सुविस्तारं तद्दण्डं लोहदण्डकम्
दण्डमूले तु पद्मं स्याद्विस्तारं पालिकासमम्  ३५
तदर्धं मानमित्युक्तं मानाङ्गुळविभाजितम्
एकांशं पट्टिकाज्ञेया शेषांशेन कुशेशयम्  ३६
वृत्तं वा चतुरश्रं वा कारयेत्तु विचक्षणः
हरिका सममानेन पद्मोर्ध्वे पट्टिकां कुरु  ३७
मध्य पत्रस्य मध्ये तु लिखेदब्जन्तु तन्मुखम्
एवं लक्षणमाख्यातं प्रतिष्ठां कारयेत्ततः  ३८
--------------

-------------- दक्षो विश्वामित्रसमन्ततः
वामीकेन मुनिस्सत्यः पुलस्त्यः पुलहस्तयः  १
अतिदीर्घवत्तांशो बोधायनस्सनातनः
सनत्कुमारो मेधावी वालखिल्यो मुनिस्तथा  २
आलम्बायाश्च चन्द्राग्नि शिव शोव वलगणाः
काश्यपश्चाङ्गीरसस्थूलकर्दमश्चच्यवनो नदः  ३
अन्यायश्च यशोपाण्डुश्शङ्कुकर्णः पुरातनः
शङ्खस्थूलशिखा चैव शरजो रोमहर्षणः  ४

ऋापस्तम्बसमे वर्षो शिखागोचरवर्गिणः
भारद्वाजात्रिकांशश्च मार्कराडेयश्शिरोगतः ५
धूमभादेवशङ्कश्च पिङ्गळो वरणश्शुनः
विश्वास्योव्याघ्रपादश्च रामश्च नरवासुकी ६
कृष्णश्चैव इमे सर्वे ज्योतिर्गोचरवर्गिणः
गौतमो गालवश्चैव गौवलो वयवस्तथा ७
गार्ग्यश्च विजयश्चैव बिन्दुस्तो पटवस्तथा
ऋृश्यशृङ्गो वसिष्ठश्च कात्यायनबृहस्पती ८
सावित्रीगोचराश्चैते भ्रातरो गौतमस्य च
ऋगस्त्यो मुद्गलो वत्सो श्वेतको सोविभावसुः ९
पराशरकवीपश्च छफेलो नीललोहितः
पोलयोलश्च इमे सर्वे व्योमगोचरवर्गिणः १०
कुलेष्वेतेषु सञ्जाता ऋादिशैवा इति स्मृताः
समयीच विशिष्टश्च निर्वाणश्चाभिषेकयुक् ११
ऋाचार्यपुरुषाश्चैव शैवाचारनियन्त्रिताः
पुरुषार्थफलं प्राप्तुं लिङ्गबेरान्प्रपूजयेत् १२
लक्षणं च प्रमाणं च गुरुणोक्तेन मार्गतः
समालोक्याथ शास्त्राणि तत्तदाश्रमयुक्तकम् १३
ऋादाय शोभने काले प्रतिष्ठाविधिपूर्वकम्
ऋाचार्यहस्तादादाय यावज्जीवं प्रपूजयेत् १४
ऋन्यथा निष्फलं याति प्रायश्चित्ती भवेद्ध्रुवम्
एवं क्रमेण यः पूजां कुर्याज्जीवावधिन्ततः १५
सोपि पुरायाकृतिर्भूत्वा सायुज्यं व्रजति प्रभोः
पश्चात्पूजित लिङ्गादीन्यजेतां पुत्रशिष्यकौ १६
पुत्राद्यभावे लिङ्गादीन्त्यजेत्पुरायफलाप्तये
समुद्रे च महानद्यां गङ्गायामयकूपके १७

निक्षिपेन्निश्चिता बुद्ध्या गृह्णीयान्न कदाचन
अन्येन पूजितं लिङ्गमन्यदीयं च बेरकम्  १८
न गृह्णीयाद्देशिकस्तु येन केन प्रकारतः
मोहादज्ञानतश्चैव गृहीत्वा पूजितं यदि  १९
स सद्यः पातकी भूत्वा त्याज्य स्यात्सर्वकर्मसु
कर्महीनश्च पुरुषः नरकं च सगच्छति  २०
महद्भिः पूजितं लिङ्गं गणनाथादिबेरकम्
अनुगृह्य प्रदत्तं चेत्पूजनीयं विशेषतः  २१
अन्येनैव तु वर्णेन लिङ्गादि यदि पूजितम्
तद्बिम्बानि तदन्यानि गृहीत्वा यदि पूजयेत्  २२
वेदशास्त्रार्थ सम्पन्नस्सोऽपि गच्छति नीचताम्
तस्मात्सर्वप्रयत्नेन गृह्णीयादन्यतो न तत्  २३
मोहादज्ञानतश्चैव यदि गृह्णाति पूजितम्
प्रायश्चित्ती भवेत्सद्यः प्राप्नुयान्निरयं पुनः  २४
तद्दोषशान्तये पश्चात्प्रायश्चित्तं समाचरेत्
अघोरास्त्रञ्च मन्त्रं च लक्षं चायुतमेव च  २५
पञ्चगव्यमभिप्राश्य शान्तिहोमं समाचरेत्
स तत्पापादभिनिर्मुक्तो पङ्क्तियोग्यो भवेद्ध्रुवम्  २६
ज्ञानतः कुरुते मर्त्यः निष्कृतिर्नैव विद्यते
अपि निष्कृतिकामस्तु संवत्सरन्तु देशिकः  २७
जलतीरे जलं पीत्वा भिक्षान्नमेकवारकम्
भुक्त्वा तु निरसं भूमौ निवसेद्वृक्षमूलके  २८
संवत्सरान्ते गव्येन शुद्धस्सन्पुण्यदेशके
ब्राह्मणान्समनुज्ञाय कुर्याच्छान्त्यादि होमकम्  २९
अनेनैव प्रकारेण निष्कृतिर्नैव विद्यते
समयाद्यभिषेकान्तं दीक्षितो देशिकोत्तमः  ३०

पूजितं चान्य वर्णैश्च बिंबं लिङ्गं समूल्यकम्
पूजयेद्यदि सम्प्राप्य तन्नाशं च भवेद्ध्रुवम् ३१
स्वायम्भुवादि लिङ्गानां पूजां नैव सकारयेत्
यदि कुर्यात्प्रमादेन कर्ता धर्मस्य नश्यति ३२
राज्य क्षोभाश्च जायन्ते महामारी प्रवर्तते
पशुहानिस्सस्यहानिरनावृष्टिर्भवेद्ध्रुवम् ३३
तस्मात्सर्वप्रयत्नेन प्रव्रजेत्पुरतो बहिः
न त्यजेदभिमानेन मृत्यधीना भवेत्पतिः ३४
ज्ञानतः कुरुते पूजामन्यजाति प्रपूजितान्
बिम्बाल्लिङ्गं च तन्मूल्यमाग्रहेण च सेकयुक् ३५
निष्कृतिस्तस्य नैवास्ति सर्वशास्त्रेषु सत्यशः
वेदाध्ययन सम्पन्नो कुलीनो देशिकोत्तमः ३६
तथापि निष्कृतिस्तस्य महतीति निगद्यते
आरभ्य समयात्पूर्वमभिषेकान्तमाचरेत् ३७
अनुष्ठाय च सत्कर्म शन्तिहोमपुरस्सरम्
अस्त्रं पाशुपतं मौनी मन्त्रं जप्त्वा सलक्षकम् ३८
पश्चाद्भवति पूजार्हः नान्यथा गतिरस्ति हि
अतस्वाचार्य वर्यस्तु शम्भु ध्यान परायणः ३९
पूज्य स्वायम्भुलिङ्गादीन् जगत्क्षेमाय नित्यशः
सर्वशास्त्रार्थतत्वज्ञः सर्वतन्त्रकलानिधिः ४०
सदाचाररतो विद्वान् शिवध्यान परायणः
शिवशास्त्ररसाम्बोधि पारदृश्चास्य सेकयुक् ४१
ब्रह्मचारी गृहस्थश्च वानप्रस्थो थ भिक्षुकः
आचार्य पदमाप्नोति लोकानुग्रहहेतवे ४२
ब्रह्मचर्य व्रतेस्थित्वा तत्तद्वर्णानुसारतः
आश्रमोचितकार्याणि कृत्वा ध्यानपरो यदि ४३

स च देशिकयोग्यत्वं नैष्ठिको व्रजति ध्रुवम्
अन्यथा यदि नार्हत्वं सगच्छति पापकृत् ४४
ग्रही चेत्सकुले जातां कन्यामुद्वाह्य शोभनाम्
सवर्णामसगोत्रां च मात्रादि पदवर्जिताम् ४५
तया सह प्रकृत्यैव यजनादि क्रियाश्शुभाः
धर्मार्थकाममोक्षांश्च साधयेन्मतिमान्नरः ४६
स एव योग्यतामेति सदाचार्य पदे शुभे
अन्यथा पातकी भूत्वा नरकं चाधिगच्छति ४७
कन्दमूलफलाहारो शिवपूजा धुरन्धरः
मुनिव्रतं समाश्रित्य योगाभ्यासरतश्शुचिः ४८
वनवासपरो नित्यं वानप्रस्थोऽथ भिक्षुकः
भवतीति न सन्देहो विपरीतो पतत्यधः ४९
शान्तो साधनसम्पत्ति युक्तो मोक्षपरस्सुधीः
उत्तमाचार्यतामेति पूज्यते च समानवैः ५०
उत्पथं प्रतिपन्नत्वं अक्रमात्प्राप्यते नरः
अत्र कश्चिद्विशेषोऽस्ति परार्थालयपूजने ५१
अधिकारो गृहस्थस्य नैवान्येषां भवेत्क्वचित्
अपत्नीकाङ्गहीनस्य रोगिणो दुर्जनस्य च ५२
नाधिकारो भवेत्यद्भवा परार्थे देवतार्चने
कारयेद्यदि मोहेन शम्भुपूजां शिवालये ५३
तैस्साकं धर्मकर्ता च दुर्गतिं चैव गच्छति
तद्दोषशमनार्थाय सहस्रस्नपनं चरेत् ५४
वर्णाचारविहीनश्च कुलहीनपरिग्रहः
मद्यपो कामुको मत्तो शिवधर्मविहीनकः ५५
आदिशैव कुले जातराचार्यपदभागपि
आत्मार्थपूजने चैव परार्थालयपूजने ५६

न भवेदधिकारी च सत्यमेव न संशयः
मोहात्तेनैव पूजा च क्रियते दिनमात्रकम् ५७
अनावृष्टिर्राज्यहानिर्महामारी प्रवर्तते
तद्दोषपरिहाराय शान्तिहोमं विधाय च ५८
पुनस्तद्दिनपूजा च कृत्वा क्षेमं भवेद्ध्रुवम्
आदिशैव कुले जातां कन्यामुद्वाह्य देशिकः ५९
दीक्षासेकसमायुक्तो शिवध्यानपरायणः
शिवशास्त्रपरोधीमान् पूज्यते च महात्मभिः ६०
सोप्याचार्यवरः पूजां कुर्यान्नित्यं शिवालये
तत्पूजया सदा शम्भुः प्रसादाभिमुखो विभुः ६१
लोकान्रक्षति सर्वेशः पिता पुत्रमिव प्रियम्
अन्यथा न भवेत्तस्य कदाचिदधिकारिता ६२
आदिशैव कुलोत्पन्नो महाशैव कुलोद्भवाम्
कुमारीं परिगृह्या च दीक्षासेकयुतोऽपि वा ६३
परार्थालयपूजाञ्च न कुर्यादभिमानतः
क्रियते यदि मोहेन राजामृत्युमवाप्नुयात् ६४
दुर्भिक्षं जायते भूमौ धरणी विफला भवेत्
मोहेन यदि कुर्यान्निष्कृतिर्भवति ध्रुवम् ६५
अशीति स्नपनं चैव प्रसन्नार्चां समाचरेत्
तस्मात्सर्वप्रयत्नेन सर्वमालोच्य कारयेत् ६६
तत्तीरे स्थण्डिलं कृत्वा प्रतिमान्तत्र विन्यसेत्
इति योगजे क्रियापादः

Reference:

Transcript T0247 from the collection of the IFP reproduced with authorization of the IFP in accordance with the Agreement signed between IFP, EFEO and MIRI on January 31, 2006.

Transcript is "copied from the paper manuscript of "Yogajagama" etc. belonging to Sri Swaminatha guruukal Tiruvavadatenai. The size of this manuscript is 22 cm. x 35 cm with an average of 40 lines to 1 page, with a medium fair handwriting. It contains 188 pages and the transcript covers 347 pages (285 of which are the Yogaja Agama).